श्रीचक्रवर्तितनयामिरुगाम्बिकां यः सूर्यान्ववायसुकृतैकफलं सुशीलाम् ।
पुंनिंडिभूपतनयां ललनाललामभाग्योन्नतामुदवहद्गिरिजामिवेशः[1] ॥

I have a feeling that the passage has some connection with the name of his consort, though I am not able at present to correct the reading to fit into it.

We may definitely say that the prince who advised Amṛtānanda to write the book is the son of this Bhaktirāja[2]; I am not sure if it is the Annadeva who succeeded him or any other brother of his. The only other brother of whom there is inscriptional evidence does not bear the name of Manma (Manna or Manva[3]). If we accept this Bhaktirāja as the king who was ruling the country when the work was written, we must say that the work was written before the death of Bhaktirāja, in 1366 A.D. We may assign the work to the beginning of the second half of the fourteenth century.

*Adyar Library* C. KUNHAN RAJA
25-9-49

---

[1] *Ibid.*, (L. 28) and Fourth Plate, First Side (L. 29).

[2] One difficulty is that Āmṛtānanda speaks of his Title as स्वागमहासमुद्र, which is not found in the Inscription. But this is not very serious.

[3] *Ibid.*, Vol. xxvi, No 2, P. 27, LL. 26-28.

# उपोद्घातः

काव्येषु वाच्यातिरेकेण प्रतीयमानस्य सरसस्य निगूढस्यैवार्थस्य रसिकजनहृदयावर्जकता, नागूढस्य सुस्पष्टविवृतस्येति नेदमनुभवविसंवादि सहृदयानाम् । नियतिरियं न केवलं काव्येषु, परं सरसरसिकसंलापगोष्ठीष्वपि ; यन्मूलोऽयं तत्र विदग्धाविदग्धप्रविभागो रसिकानाम् । 'कस्माद्देशादागतो भवान्' इति विवक्षित एवार्थः 'कतमो वा भवद्भिरहपर्युत्सुकजनो देशः' इति वचनभङ्ग्या विक्रियमाणः कमपि चमत्कारमुपजनयति सहृदयानां चेतसि । अत एवालंकारिकचूडामणिः सर्वज्ञभामहो वक्रोक्तिमेव वाचामलंकरणहेतुमभिमन्यते । यदाह—

"वक्राभिधेयशब्दोक्तिरिष्टा वाचामलंकृतिः ।"
"सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना[1] ॥"

इति । तदनुसारिणश्चान्ये वक्रोक्तिसौभाग्यपरीवाहभूतानेव व्याजस्तुतिनिन्दादीनलंकारानाद्रियन्ते । तदेवं निगूढस्यार्थस्य रस्यतातिशयाधायिनो रसा अलंकाराश्चेति सर्वसंप्रतिपन्नम् । सोऽयं काव्यरसास्वादो रसालंकारादिलक्षणपरिज्ञानमन्तरा न भवितुमर्हति । यद्यपि तल्लक्षणावबोधविधुरा अपि परिमितसंपादितपदपदार्थज्ञानाः किंचिदिव सत्काव्यपठनादिना प्रमोदमनुभवन्ति, तथापि तल्लक्षणविवेचनपरिष्कृतचेतस एव विगलितवेद्यान्तरं निरति-

[1] Bhāmahālaṃkāra, 1—36; 2—85.

शयमानन्दमनुभवितुं प्रभवन्तीति सर्वसाक्षिकमेतत् । यद्यपि पामरा जनाः पश्वादयश्च हृद्यकण्ठैर्गायकैर्गीयमानं संगीतमुपश्रुत्य किंचिदिव चेतसि प्रमोद-माबिभ्रति, तथापि तत्तद्रागतालादिलक्षणपरिज्ञानिन एव तस्य सौभाग्यं मधुरिमाणं च यथावदवगन्तुं तेनानन्यसाधारणं प्रमोदातिशयमनुभवितुं च प्रभवन्ति । अतो रसालंकारमेदुरतया भावुकानां चेतसि ब्रह्मानन्दसध्रीचीं कामपि चमत्कृतिमादधानानां काव्यरत्नानां लक्षणादिनिरूपणे रसालंकारादि-विवेचने च बहुधा प्रयतितं मेधाविभिः ।

तच्चेदं शास्त्रं साहित्यशास्त्रमलंकारशास्त्रमिति च प्रथामुपगतं बहुप्रपञ्चं ववृधे । सहितानां भावो हि साहित्यमित्युच्यते । पदवाक्यप्रमाणादिरूपेण काणादपातञ्जलादिरूपेण गीतनाट्यादिरूपेण च बहुधा विभिन्नानां विद्यानां समाहारेण प्रवृत्तत्वादिदं साहित्यशास्त्रं भवति । कामं भवन्तु विद्वांसः प्रत्येकमेकैकस्मिन् शास्त्रे सुबहु कृतपरिश्रमाः स्वस्वमतस्थापने प्रवीणतमाश्च, परं तु न ते सर्वेऽपि कवीभवितुं प्रभवन्ति । कविना हि सर्वतन्त्रयाथार्थ्यवेदिना तत्तच्छास्त्रसारासारविवेचनशीलेन तत्तत्सिद्धान्तं मधुरया सरसया च वाचोपवर्णयितुं प्रवीणेन च भाव्यम् । [1]यदाह यायावरीयः—"आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति चतस्रो विद्याः । पञ्चमी साहित्यविद्या । सा हि चतसृणामपि विद्यानां निष्यन्दः" इति । तथा चाह—

> "[2]पदवाक्यप्रमाणेषु तदेतत्प्रतिबिम्बितम् ।
> यो योजयति साहित्ये तस्य वाणी प्रसीदति ।"

इति । ये तु सतृणाभ्यवहारिणः "[3]शब्दार्थौ सहितौ काव्यम्" इति पूर्वेषां

[1] Kāvyamīmāṁsā P. 4. G. O. S. No. I Baroda, 1934.

[2] Abhidhāvṛttimātṛkā, Stanza 14. Nirnayasagar Press Bombay, 1916.

[3] Bhāmahālaṁkāra, 1-16.

वचने दृढमुष्टिकामवलम्बमानाः 'शब्दार्थयोः सहितयोर्भावः साहित्यम्' इति निर्ब्रुवन्ति, तैः काव्यशास्त्रमिति ऋजुना पथा निर्देष्टव्ये साहित्यशास्त्रमित्यन्यथा निर्देशे समञ्जसो हेतुर्वक्तव्यः। अस्मदुक्तरीत्या निर्वचने तु सर्वविद्यानां ज्ञानं कवीनामावश्यकमित्यर्थावेदनाय तथा निर्देश इति सामञ्जस्यमस्ति। अलंकारशास्त्रमिति व्यवहारे अलंकुर्वन्तीत्यलंकारा इति काव्यशोभाकरा उपमादयोऽलंकारा माधुर्यादयो गुणाः शृङ्गारादयो रसाश्चालंकारशब्देन संग्राह्याः। तदेवं चमत्कृतिविशेषजनकत्वमलंकारत्वमिति सुभगया रीत्या निर्वचनं भाव्यम्। प्रायिकीं लोकप्रसिद्धिमनुसृत्यानुप्रासादिषु शब्दालंकारेषु तथोपमादिष्वर्थालंकारेषु च यद्यलंकारशब्दः प्रयोक्तुमिष्यते, तदापि चमत्कृतिविशेषेति विशेषशब्दबलादितरव्यावृत्तिः करणीया। गुणैः रसैश्च जन्यायाश्चमत्कृतेर्विलक्षणा हि अनुप्रासोपमादिजन्या चमत्कृतिः। अत्राव्याप्त्यतिव्याप्त्याद्युद्भावने पण्डितवरैर्नातीवाग्रहः कार्यः। ये त्वत्र स्वेषां पाण्डित्यं तर्कातर्किनैपुणं चाविष्कर्तुमवच्छेदकावच्छिन्नादिपदघटनेन निर्वचनं कर्तुं प्रयतन्ते, तानित्थमुपहसन्ति सरसभारतीस्पृहयालवः सहृदयाः—

"कठोरतार्किकालापैर्यदि काव्यपरिष्कृतिः।
वासीकुठारकुद्दालैर्नासाभरणरञ्जनम्॥"

इति।

तदेवं काव्यलक्षणादिकथने बहुषु व्यापृतवत्स्वपि, भरतमुनेरनन्तरमाप्तमतया परिगणिता भामहदण्डिप्रभृतयोऽपि न न्यक्षेण विषयमिमं प्रत्यपादयन्। भामहः काव्यालंकारे श्रव्यकाव्यानुबन्धिनो गुणदोषानलंकारांश्च निरूपयन्नपि दृश्यकाव्यनिरूपणे रसविवेचने च सुतरामुदासिष्ट। एवमाचार्यदण्ड्यादयोऽपि। धनंजयादयस्तु दृश्यकाव्यनिरूपणव्यासक्ताः श्रव्यकाव्यनिरूपणे वाचंयमतामवालम्बन्त। एवमेकत्र सर्वेषां साहितीविद्यासंबद्धविषयाणां समुच्चित्य निरूपणं दुर्लभमाकलय्य कविवरोऽयममृतानन्दयोगी

रमणीयमिममलंकारसंग्रहं नाम ग्रन्थमारचयत्। ग्रन्थोऽयं सर्वालंकारसंग्रह इत्याख्ययापि कतिपयेषु कोशेषु प्रख्याप्यते। भामहदण्ड्यादीनां प्राचामालंकारिकाणां ग्रन्थेभ्यस्तानि तानि वचनान्युद्धृत्य मनागिवावापोद्वापाभ्यामत्र निवेश्य संकलितानीति विभाव्यमस्यान्वर्थं नाम।

अत्र च ग्रन्थारम्भे समुद्दिष्टेन निरूपणीयविषयपरिगणनेन ग्रन्थोऽयमेकादशभिः परिच्छेदैः प्रविभक्त इत्यवगम्यते। मातृकाकोशेष्वपि तथैकादश परिच्छेदाः प्रविभज्य निर्दिष्टा उपलभ्यन्ते। एवं स्थिते वस्तुतत्त्वे १८८७ तमे क्रिस्तुसंवत्सरे कालीघट्ट (Calcutta) नगरे मुद्रापितमपूर्णमस्य पुस्तकमेकं प्रमाणीकृत्य पञ्चभिः परिच्छेदैः परिमितोऽयं ग्रन्थ इति केषांचिदाधुनिकविमर्शकानां वचनं न विस्रम्भार्हं प्रतीमः[1]। एवमादितः पञ्च परिच्छेदा एवामृतानन्देनारचिताः, उपरितनो भागस्त्वन्येन केनापि स्वयं विरचय्य संयोजितः स्यादिति तदनुसार्युल्लेखोऽपि न विचारसहः—यतः पूर्वोत्तरभागयोरुभयोरपि ग्रन्थरचनाशैल्यभिन्नरूपा लक्ष्यते, आप्ततमैश्चान्यैः ग्रन्थकारैरुपरितनभागस्थानि वचनानि बहून्यमृतानन्दीयतयोपादीयमाना दृश्यन्ते। अत एकादशभिः परिच्छेदैः परिच्छिन्नोऽयं ग्रन्थ इति निर्णीयते।

अथैकादशसु परिच्छेदेषु प्रतिपाद्यमाना विषयाः—

प्रथमः परिच्छेदः—काव्यानामारम्भे प्रथममुपयोगार्हाणां शुभंयूनां तदितरेषां च वर्णानां गणानां च विवेचनमत्र क्रियते। क्षेमंकरेण वर्णेन गणेन च समारब्धे काव्ये, तत्प्रणेतुः कवेस्तद्वर्णनीयस्य नायकस्य तत्पठितॄणां च भद्राणि भवन्ति, अन्यथा त्वभद्राणीत्यशुभानां वर्णगणानां सर्वथा त्याज्यत्वमवसीयते। "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च" इति हि भगवान् पतञ्जलिरुपदिशति[2]।

[1] History of Sanskrit Poetics by S. K. Dc. 1923 Vol. I Page 285.
[2] Mahābhaṣya 1-1-1.

इत्थमात्मनोपवर्णितं नियमं स्वस्याचारेणापि सत्यापयन् ग्रन्थकारो ग्रन्थमिमं "[1]जगद्वैचित्र्यजननीम्" इति जकारेण यगणेन च प्रारेभे । "मित्रलाभौ जः[2]" इति "यो वारिरूपो धनकृत्[3]" इति च तयोः फलमभिहितं स्वेनैव । भगवानादिकविर्वाल्मीकिश्चादिकाव्यमारभमाणः "[4]तपःस्वाध्याय-निरतम्" इति तकारं यगणं च प्रयुयोज । "सुखं तात्तु[5]" इति च तकारोपयोगं सुखप्रदमाचष्टे ग्रन्थकारः । नियमश्चायं न केवलं पद्यकाव्येषु, अपितु गद्यकाव्येष्वपि । तथा न केवलं संस्कृतकाव्येषु, अपितु प्राकृत-काव्येष्वपीति वेदितव्यम् ।

द्वितीयः परिच्छेदः—काव्यस्य कवयितारः कवयः सप्तविधाः—रौचिकवाचिकादिभेदात् । वामनेन काव्यालंकारसूत्रे अरोचकिनः सतृणाभ्यवहारिणश्चेति कवयो द्वेधा विभिद्यन्ते । तत्र प्रथमे विवेकिनः शास्त्रेण शासनीया भवन्तीति तान् सप्तधा प्रविभजत्यमृतानन्दः । तत्र षष्ठो विवेकी

"शब्दार्थगुणदोषज्ञो महाकविमतानुगः ।
शास्त्रालंकारसंस्कारी विवेकी कविपुंगवः[6] ॥"

इति सप्तविधेषु कविषूत्तमो निर्दिष्टः । अत्र शास्त्रसंस्कारेणालंकारवासनया च यो युज्यते स एव कविपुंगवो भवितुमर्हति, नान्य इति वदन्

"अधनस्येव दातृत्वं क्लीबस्येवास्त्रकौशलम् ।
अज्ञस्येव प्रगल्भत्वमकवेः शास्त्रवेदनम्[7] ॥"

इति भामहोक्तिमनुस्मारयति । अथ कवितानिदानानि शक्तिनैपुणादीन्यनुदर्शयन्

"शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे[8] ॥"

[1] Alaṁkārasaṁgraha P. 1.
[2] Alaṁkārasaṁgraha P. 4.
[3] ,, P. 4.
[4] Rāmāyaṇa 1-1-1.
[5] ,, P. 4.
[6] Alaṁkārasaṁgraha P. 6.
[7] Bhāmahālaṁkāra 1-3.
[8] Kāvyaprakāśa 1-3.

इति प्रकाशकृद्वचनमनुसंधत्ते। अत्र च "नैसर्गिकी च प्रतिभा[1]" इत्याचार्यदण्डिवचनं "सा देवताप्रसादाच्च[2]" इति शक्तिविषयेऽतिदिशति। अथ च वाक्यार्थस्वरूपविवेचने प्रवृत्तः "संयोगो विप्रयोगश्च[3]" इत्यादिकं भर्तृहरिवचनमवलम्बमान आलंकारिकसमयमाविष्करोति।

तृतीयः परिच्छेदः—अत्र रसा निरूप्यन्ते। रसविषये सन्त्यालंकारिकाणां मतभेदाः। यथा—"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः[4]" इति भरताचार्यवचने निष्पत्तिशब्देनोत्पत्तिर्विवक्षितेति केचित्। ज्ञप्तिरित्यन्ये। भुक्तिरिति परे। व्यक्तिरितीतरे। तत्र विभावैरुत्पादितो रसोऽनुभावैर्ज्ञापितो व्यभिचारिभिः परिपोषितश्च भवतीत्युत्पत्तिवादिनां भट्टलोल्लटादीनां मतम्। विभावादिभिः सर्वैर्मिलितैः रसो ज्ञाप्यते, न तूत्पाद्यते, यथा धूमेन धूमध्वज इति ज्ञप्तिवादिनां महिमादीनां मतम्। विभावादिभिः सहकारिभिः रसो भुज्यते; रसभोगश्चायं लौकिकभोगविलक्षणः स्वप्रकाशानन्दमयसंविद्विश्रान्तिभूमिरिति भोगवादिनां भट्टनायकादीनां मतम्। लोके नायिकानायकयोर्दर्शनस्पर्शनादिनानुमितो यस्तद्रतिरूपः स्थायिभावः सामाजिकानां हृदि विपरिवर्तते, स एव पश्चात्काव्यनाट्यप्रकाशितैर्विभावाद्यैर्व्यज्यमानः सन् रसो भवतीति व्यक्तिवादिनामानन्दवर्धनाभिनवगुप्तादीनां मतम्। अस्यालम्बनविभावलाभमनुसृत्यैव लोल्लटादिभिरुत्पत्त्यादय उत्प्रेक्षिता इति ज्ञेयम्। रसश्चायं नाभिधाया गोचरः, संकेताभावात्। नापि लक्षणायाः, मुख्यार्थबाधाभावात्। नापि तात्पर्यस्य, तदभिधायकपदान्तरसाचिव्याद्यभावात्। तस्मादभिधालक्षणातात्पर्यातिरिक्तव्यञ्जनाव्यापारगम्यः। व्यञ्जकश्च विभावादिः। ब्रह्मानन्दसब्रह्मचारी रसः। अयं चासंलक्ष्यक्रमव्यङ्ग्यः। विभावादिव्यञ्जकक्रमसत्त्वेऽपि रसास्वादातिशयमहिम्ना शतपत्रपत्रवेधनवदसंलक्ष्यक्रमत्व-

[1] Kāvyādars'a 1-103.
[2] Alaṁkārasaṁgraha P. 7.
[3] Vākyapadīya 2-317.
[4] Nāṭyas'āstra 6-32.

मिति सिद्धान्तः। अत्र चामृतानन्दोऽभिव्यक्तिपक्षमेवादृत्य रसविवेचने प्रवर्तते। यदाह—"ज्ञायमानैर्विभावाद्यैर्व्यक्तः स्थायी रसः स्मृतः" इति[1]। शृङ्गारहास्यादयः शान्तेन नवमेनाप्यनवमेन सह नव रसाः, तेषां प्रत्येकं यथार्हं विभावानुभावसात्त्विकव्यभिचारिभावाश्चात्र प्रतिपादिताः। नवानामपि रसानां प्रत्येकं वर्णविशेषं देवताभेदं च विनिर्दिशन् कविरसौ तत्तद्रसानां स्वरूपगुणादीन् सहृदयानां चेतसि द्रढयति। शान्तरसप्रस्तावे कविरयम्,

"अत्रालम्बनविभावः स्याच्छम्भोस्तच्छाश्वतं पदम्।
उद्दीपकास्तु वेदान्तवेदिसंभाषणादयः[2]॥"

इति निर्दिशन्नात्मनो वेदान्तितां तत्रापि शिवभागवततां चोपष्टम्भयति। "शान्तः स्फटिकवर्णोऽस्य परं ब्रह्माधिदेवता[3]" इति वदन् शान्तरसप्रधाने काव्ये नाट्ये च परब्रह्ममननशीलाः परमभागवता एव रसास्वादे प्रभविष्णवो नान्ये इति तादृशानां सभ्यानां विरलतां चाभिमन्यते। एवं रसानां मिथो वैरप्रस्तावे "शान्तः सर्वोत्तरस्तस्य न मैत्री न विरोधिता[4]" इति शान्तस्य सर्वोत्कृष्टत्वं "सममतिरात्मसुहृद्विपक्षपक्षे[5]" इत्युक्तां समचित्ततां चाभिव्यञ्जयन् शान्तरसनास्तित्ववादात् कर्णौ पिधाय सुदूरमपक्रान्तः स्वस्य योगिप्रवराभिख्यां सत्यापयति। एवं हास्यरसस्योदाहरणतया

"संमार्जनीसततसंगमनादपूतं
पाणिं पवित्रितकचे बहुतीर्थतोयैः।
मन्मस्तकेऽर्पितवती मधुपानमत्ता
वित्तस्य दानमिह किंनु विमाननाय[6]॥"

[1] Alaṁkārasaṁgraha P. 10.
[2] and [3] „ P. 21.
[5] Viṣṇupurāṇa 3-7-20.
[4] Alaṁkārasaṁgraha P. 22.
[6] Alaṁkārasaṁgraha, P. 16.

इति पद्यं निदर्शयन् सर्वस्वदानेऽप्यतृप्तया गणिकयात्मनः संभूतं पराभवं सनिर्वेदमनुशोचतः कस्यचित् धूर्तविटस्य वचनवर्णनमुखेन लोकस्य वैषयिकसुखाद्विरक्तिमुपदिशतीवायं कविः। भामहादिभिः प्राचीनैरालंकारिकैरङ्गीकृतान् रसवदाद्यलंकारान् निराकृतवन्तं कुन्तलकमनादृत्य तानलंकारानङ्गीकृत्य सोदाहरणं प्रपञ्चयत्ययं ग्रन्थकारः।

चतुर्थः परिच्छेदः—धीरोदात्तललितादिभेदभिन्नानां चतुर्णां नायकानां प्रत्येकं दक्षिणशठादिभेदेन पुनरवान्तरभेदमुपवर्ण्याहत्याष्टचत्वारिंशत् भेदा उक्ताः। तथा स्वीयान्यादिभेदेन त्रिविधानां नायिकानां पुनर्मुग्धामध्यादिभेदेन विविधा भेदाः प्रतिपादिताः। एवं शोभाविलासादीनष्टौ नायकालंकारान् भावहावादीन् विंशतिं नायिकालंकारांश्चोपपादयति।

पञ्चमः परिच्छेदः—"रीतिरात्मात्र काव्यस्य[1]" इति वैदर्भ्यादीन् रीतिभेदान् काव्यस्यात्मतया निर्दिशन् वर्णपदसंघटनारूपा रचनैव काव्यस्य ग्राह्यतायां प्रधानतमो हेतुरित्यभिप्रैति। अत्र वैदर्भीरीतिनिरूपणावसरे 'वैदर्भीरीतिसंदर्भे कालिदासः प्रगल्भते' इत्याभाणकमनुसरन् कालिदासीयमेव

"वैदेहि पश्यामलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम्।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम्[2]॥"

इति पद्यरत्नमुदाहरति ग्रन्थकारः। सहृदयहृदयावर्जकेन रचनाविशेषेण लब्धसत्ताकस्य काव्यस्य परिकर्मसाधनान्युपमादयोऽलंकाराः सुन्दरस्य देहस्येव केयूरादयः। अथ श्लेषप्रसादादयो गुणाः शोभावहा निरूपिताः। स्वभावोक्तिप्रमुखाः पञ्चविंशतिरर्थालंकाराः सलक्षणोदाहरणमुपवर्णिताः। गुणालंकारयोश्चारुताहेतुत्वे समानेऽपि तयोराश्रयभेदात् पृथक्परिगणनम्। संघटनाश्रया गुणाः, अर्थाश्रयास्त्वलंकारा इति परस्परं भेदः। अलंकाराश्चैते

[1] Alaṁkārasaṁgraha P. 42. [2] Raghuvaṁsa 13—2.

चतसृभिः कक्ष्याभिः प्रविभज्यन्ते। तथाहि—केचित्प्रतीयमानवस्तुकाः; यथा—समासोक्तिव्याजस्तुत्यादयः। केचित्प्रतीयमानौपम्याः; यथा—उत्प्रेक्षा-दीपकादयः। केचित्प्रतीयमानरसभावाः; यथा—रसवत्प्रेयऊर्जस्विदादयः। एवं साधर्म्यमूलेष्वलंकारेष्वपि साधर्म्यस्य भेदप्राधान्यात् अभेदप्राधान्यात् भेदाभेदप्राधान्याच्च त्रैविध्यं भाव्यम्। निदर्शनदीपकादयो भेदप्रधानसाधर्म्यमूलाः। रूपकपरिणामादयोऽभेदप्रधानसाधर्म्यमूलाः। अनन्वयस्मरणादयो भेदाभेदप्रधानसाधर्म्यमूला अवगन्तव्याः। अत्र चालंकारोद्देशे कविरयमाचार्यदण्डिनमेवानुसरति। तथा दीपकावृत्त्योर्निर्देशे विवक्षिते "दीपकावृती[1]" इति दण्डिवचनमेवानुवदति। अत्र आवृतिरावृत्तिरिति पर्यायशब्दौ। आङ्पूर्वकात् वृतुधातोः स्त्रियां क्तिनि आवृत्तिरिति रूपम्। तत एव "इक्श्तिपौ धातुनिर्देशे[2]" इति इकि आवृतिरिति रूपम्। वाच्यवाचकयोरभेदविवक्षया निर्देशः। "इक् कृष्यादिभ्यः[3]" इति वा इक्। "इगुपधात् कित्[3]" इतीन्प्रत्ययस्तु कर्तर्येवेति न प्रकृते स्वरसोपयोगी। अन्ततः प्रत्यक्षानुमानोपमानागमार्थापत्त्यभावसंभवैतिह्यानीत्यष्टौ प्रमाणान्यलंकारकोटौ परिगणय्य सलक्षणोदाहरणं प्रतिपादितानि।

षष्ठः परिच्छेदः—परिच्छेदेऽत्र काव्येषु सर्वथा त्याज्यतयाभिमता दोषाः प्रतिपादिताः। यदाहुः—

> "तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथंचन।
> स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्[4]॥"

इति,

> दोषः सर्वात्मना त्याज्यो रसहानिकरो हि सः।
> अन्यो गुणोऽस्तु वा मा वा महान्निर्दोषता गुणः[5]॥"

[1] Kāvyādars'a 2—4. [2] cf. Pāṇini 3-3-108. [3] Uṇādi 569.
[4] Kāvyādars'a 1—7, [5] Alaṁkāras'ekhara 4—1.

इति च। दोषाश्च पदगता वाक्यगता अर्थगताश्चेति त्रिधा भिद्यन्ते। श्रुतिकट्वसमर्थादयः पददोषाः। प्रतिकूलवर्णादयो वाक्यदोषाः। अपुष्टकष्टादयोऽर्थदोषाः। दोषेष्वेतेषु केषांचित् कदाचित् गुणत्वमपि संभवतीति निरूपितम्। अन्ते च कविसमयसिद्धाः केचन विशेषाः प्रतिपादिताः।

सप्तमः परिच्छेदः—अत्र नाट्योपयोगिनः पञ्च संधयः, तदङ्गानि च सविस्तरमुपवर्णितानि। रूपकेषु स्तोकोपक्रान्तस्येतिवृत्तस्य वैरस्यलेशमन्तरा कथंकारं परिपोषः कर्तव्यः? तत्राप्याधिकारिकस्य तस्य प्रासङ्गिकेनेतिवृत्तेन कथंकारमुपयोगो वर्णनीय इत्यादिपरिज्ञानं संधितदङ्गवर्णनस्य प्रयोजनम्। अस्मिन् विषये दशरूपकोक्तां प्रक्रियां क्वचित्क्वचित् तत्रत्यवचनोद्धारेणानुसरत्ययं ग्रन्थकारः।

अष्टमः परिच्छेदः—अस्मिन्परिच्छेदे भारत्यादयो वृत्तयः प्रतिपादिताः। अन्ते च पात्रभेदेन भाषानियमः, परस्परसमाह्वानप्रकारश्च निर्दिष्टः।

नवमः परिच्छेदः—नाटकप्रकरणादीनां दशानां रूपकाणां स्वरूपं रसादिनियम इत्यादयः सप्रपञ्चमुपवर्णिताः। तथा नाटिकादीनामुपरूपकाणां लक्षणान्युदाहरणानि च सविस्तरमुपपादितानि।

दशमः परिच्छेदः—सिद्धिप्राप्त्यादयो नाट्यालंकारास्त्रिंशत् सम्यगुपपादिताः।

एकादशः परिच्छेदः—मुक्तकादीनां लक्षणम्, उदाहरणभोगावल्यादिचाटुप्रबन्धानां स्वरूपं च सविस्तरमुपपादितम्। चाटुप्रबन्धभेदाश्चैवमन्यत्र ग्रन्थान्तरे परिगणिताः—

"[1]चाटुप्रबन्धा विख्याता उदाहरणमादिमम्।
चक्रवालं चतुर्भद्रं चतुरुत्तरमप्यथ॥

[1] Alaṁkāramuktāvali by Kṛṣṇayajvan. Adyar Library MS. No. 29. K. 18.

आवली भोगबिरुदगुणानामथ घोषणाः ।
विजयत्यागरङ्गाणामित्याद्याः कविकल्पिताः ॥" इति ।

स चायममृतानन्दयोगी भक्तिभूपतिसूनोस्त्यागमहासमुद्रादिबिरुदाङ्कितस्य मन्मभूपतेर्नियोगादिममलंकारसंग्रहमग्रथ्नादिति ग्रन्थादिमैः पद्यैरवगम्यते । तमिमं मन्मभूपतिमधिकृत्य प्रशस्तिश्लोकान् कांश्चिदारचय्य तानेव कतिपयलक्षणानामुदाहरणतया ग्रन्थमध्ये संयोजयति ग्रन्थकारः । प्रतिपरिच्छेदमन्तिमं श्लोकमेकं तत्प्रशंसापरमायोजयति । तैश्च श्लोकैर्भूपतिरयं गण्डरगण्डः, तोण्डनिर्यङ्कः, कोमराङ्कभीमः, नूत्नसाहसाङ्कः, इत्यादिभिर्बिरुदैर्विभूषितोऽभूदित्यवगम्यते । मन्मभूपालोऽयं मन्ननाम्नाप्यभिहितस्तैलिङ्गचोडराजसु प्रसिद्धो मन्म-गण्डगोपालदेव एव भवितुमर्हतीति विमर्शका अभिप्रयन्ति[1] । जम्बुकेश्वरक्षेत्रदेवालयस्थेन प्रतापरुद्रदेवस्य शिलाशासनेन मन्म-गण्डगोपालदेवोऽयं प्रतापरुद्रस्य प्रसादपात्रं बभूवेति ज्ञायते[2] । किंच १२१९ तमे शकसंवत्सरे (1297 A.D.) लिखितेनान्ध्रदेशस्थनरसरावूपेट्टशासनेन मन्म-गण्डगोपालदेवः नल्लसिद्धेर्ज्येष्ठसूनुः प्रतापरुद्रदेवस्य परतन्त्रो भूत्वा काञ्चीं स्वायत्तीकृत्याशिषदिति विज्ञायते[3] । अनेन च शासनेन मन्म-गण्डगोपालस्य समयः A.D. 1297 तमवत्सरात् पूर्वं इति ज्ञायते । प्रतापरुद्रदेवस्य समयः A.D. 1216 आरभ्य 1299 पर्यन्त इति विमर्शकाः[4] ।

[1] The Introduction to the Rasaratnākara, Madras University Publications, Kanarese Series No. 2 Madras, 1932. Page 13.

[2] The Introduction to the Pratāparudriya, Bombay Sanskrit and Prakrit Series No. 55. Bombay, 1900. Page 17. *Vide* the verse—

"तत्राग्रजः सुतो मन्मो-गण्डगोपालभूपतिः ।
प्रतापरुद्रभूपस्य प्रसादार्जितवैभवः ॥"

[3] Epigraphica Indica Vol. VII, PP. 128—32.

[4] The Introduction to the Rasaratnākara, referred to above, Page 16.

श्रीवेंकटनाथदेशिकैः (1268 to 1369 A.D.) स्वकीये संकल्पसूर्योदये प्रस्तावनायाम्,

"[1]न तच्छास्त्रं न सा विद्या न तच्छिल्पं न ताः कलाः ।
नासौ योगो न तज्ज्ञानं नाटके यन्न दृश्यते ॥"

इति पद्यमम्रुतानन्दीयालंकारसंग्रहादुद्धृत्य निवेशितमिति तद्व्याख्यातारः[2] । अतोऽलंकारसंग्रहस्य रचनाकालः श्रीवेंकटनाथदेशिककालात् पूर्वतनः प्रायशः 1230 A.D. तमो भवेदित्यभ्यूह्यते । किंच संकल्पसूर्योदये "[3]तुण्डीरं मण्डलं मे कुलपतिरपि च स्कन्दभूपालवन्द्यः" इति श्लोके स्कन्दभूपालपदेन गण्ड-गोपाल एव चित्रोक्त्या विवक्षित इति सांप्रदायिका अभिप्रयन्ति । एतेन श्रीवेंकटनाथस्य काले काञ्च्यां गण्ड-गोपालनाम्नो भूयसी प्रथा समवर्ततेति ज्ञायते । अत एवमादिभिरुपपत्तिभिरमृतानन्दयतिर्गण्ड-गोपालदेवस्य सभायां प्रायः A.D. 1230 तमे वत्सरेऽभूत्, तदैव चालंकारसंग्रहमरचयदिति वक्तुं शक्यते ।

अत्रेदमवधेयम्—अमृतानन्दस्यालंकारसंग्रहकरणे निदेष्टा भक्तिभूपतेः सूनुः मन्मभूपाल इति निर्दिश्यते । अस्मिंश्च ग्रन्थे तस्य भूपालस्य नामोपविंशेषु प्रदेशेषु मन्म इत्येव निर्दिश्यते, न कुत्रापि गण्ड-गोपालदेव इति । यद्ययं तत्त्वतो गण्ड-गोपालदेवोऽभविष्यत् तन्नूनं यत्र कुत्रापि प्रदेशे तेन नाम्ना स निर्दिष्टोऽभविष्यत् । अतो ज्ञायते केवलं मन्मेति नाम्ना प्रसिद्धः कश्चिन्नृपतिरमृतानन्दस्य ग्रन्थकरणे प्रेरक इति । आसीच्च केवलमन्मनाम्ना प्रथितो नृपतिर्गण्ड-गोपालस्यासन्नकालिकस्तस्मिन्नेव राजवंशे । यथा—वटाटवी (तिरुवालंगाडु) शिलाशासने[4]—

[1] The Saṁkalpasūryodaya, The Adyar Library Series No. 65, Madras, 1948. Page 51.
[2] *Ibid*, Page 51. [3] *Ibid*, Page 491.
[4] Epigraphica Indica Vol. VII. pp. 119-128.

“ तस्यैरेसिद्धिनृपतिः सहजः कनीयान्
दूरं निरस्य कलिमस्य पुनः प्रवेशम् ।
रोद्धुं प्रवृद्ध इव यः प्रचुरं यशः स्वं
दिक्सीमसु स्फटिकसालनिभं बबन्ध ॥
अस्याभवन्नवनिमण्डलरक्षितारः
पुत्रास्त्रयः स्फुरितपौरुषभूषणास्ते ।
यैरन्वितः प्रसविता सुचिरं व्यराज-
त्तेजोमयैरिव निजैर्नयनैस्त्रिनेत्रः ॥
ज्यायानेषां मन्मसिद्धीश्वरः क्ष्मां
क्षाराम्भोधिश्यामसीमां शशास ।
नित्योदञ्चद्यद्यशःपञ्जरान्त-
र्व्योम श्यामं कोकिलत्वं बिभर्ति ॥ ”

इति । अत्रायं विवक्षितः संततिक्रमः—सिद्धिर्नाम कूटस्थः पुरुषः । तस्यानुजो बेट्टनामकः । तस्य त्रयः पुत्राः—दायभीमः, नल्लसिद्धिः, एर्रसिद्धिश्च । तृतीयस्य एर्रसिद्धेस्त्रयः पुत्राः—मन्मसिद्धिः, बेट्टसिद्धिः, तिम्मसिद्धिश्च । तेषु तिम्मसिद्धेरिदं पूर्वोक्तं शासनम् । तस्य शासनस्य समयः शकसंवत्सरः ११२९ (A.D. 1207). तेषु बेट्टनरपतेः पुत्रेष्वन्यतमस्य नल्लसिद्धेः पुत्रः मन्म-गण्डगोपालदेवः । सिद्धिनाम्नः कूटस्थस्य नरपतेर्वैश्य-तया नल्लसिद्धिप्रभृतीनामनेकेषां राज्ञां सिद्धिरित्युपनामासीदित्यवगम्यते । अतोऽलंकारसंग्रहेऽसकृन्मन्मनाम्ना निर्दिष्टो नरपतिर्मन्मसिद्धिरेव भवितुमर्हति । मन्मसिद्धौ राजनि तिम्मसिद्धिस्तदनुजस्तदाज्ञया पूर्वोक्तं शासनं प्रावर्तयदिति वक्तुं शक्यम् । अतस्तस्य समयोऽपि A.D. 1207 आरभ्य A.D. 1250 पर्यन्तोऽभूदित्यङ्गीकारे न काप्यनुपपत्तिः । परं तु यथा गण्ड-गोपालदेवो विद्याभिवृद्धौ श्रद्धालुर्विद्वत्परिपोषकश्चासीदिति प्रमाणतोऽवगम्यते, न तथा

मन्मसिद्धिः । अधो निर्दिष्टः सुभाषितश्लोको गण्ड-गोपालदेवकर्तृको-ऽवगम्यते । यथा—

" काशाः क्षीरनिकाशा दधिशरवर्णानि सप्तपर्णानि ।
नवनीतनिभश्चन्द्रः शरदि च तक्रप्रभा ज्योत्स्ना ॥ "[1]

अलंकारसंग्रहस्थानि वचनान्यन्यैर्ग्रन्थकारैरप्युदाहृतानि दृश्यन्ते । यथा—

१. श्रीवेंकटनाथदेशिकैः संकल्पसूर्योदये (1300 A.D.)

" [2]न तच्छास्त्रं न सा विद्या न तच्छिल्पं न ताः कलाः ।
नासौ योगे न तज्ज्ञानं नाटके यन्न दृश्यते ॥ "

इति ।

२. [3]अहोबलेन चामृतानन्दीयं वचनमुदाहरतीति पूर्वोक्तः श्लोको-ऽवतारितः । तथान्यत्र चाह—" [4]यदाहामृतानन्दः—

" सिद्धिः प्राप्तिर्विचारश्चानुनयस्तदनन्तरम् ।
उद्दिष्टमपि दाक्षिण्यं प्रसिद्धिर्गर्हणं तथा ॥
पश्चात्तापः स्पृहा क्षोभ आक्रन्दः परिहारकः ।
नीतिरुत्तेजनं शोभाभिमानः संशयस्तथा ॥
तुल्यतर्कोऽक्षमा चैव व्यवसायो विमर्शनम् ।
युक्तिः प्रोत्साहनं चैव साहाय्यं च निवेदनम् ॥

[1] Subhāṣitāvalī verse, 1797. S'āṛṅgadharapaddhati, verse 3906.

[2] Saṁkalpasūryodaya, Adyar Library Series No. 65, Page 51. Compare with Alaṁkārasaṁgraha, Page 94.

[3] Saṁkalpasuryodaya, Adyar Library Series No. 65, Page 51.

[4] *ibid* Page 162.
Compare with Alaṁkārasaṁgraha, Page 160.

अभिज्ञानं तथा पृच्छा चातिशयो गुणकीर्तनम् ।
इति त्रिंशदलंकाराः प्रायो नाट्येषु संगताः ॥"

इति ।

३. [1]गौरनार्येण लक्षणदीपिकायाम् (1450 A.D.)—

"नः प्रतापी भयासौख्यमरणक्लेशतापकृत् ।
पवर्गः —इत्यलंकारसंग्रहे"

इति ।

४. साल्वेन [2]रसरत्नाकरे—

"आनार्येरेन्दे केलिदमृतानन्दियरुद्रभट्टनाकेरदि"

इति । अमृतानन्दनाम्ना प्रथितौ द्वावपरौ ग्रन्थकृतावास्ताम् । एकोऽश्वघोषविरचितस्य बुद्धचरितस्य चरमचतुःसर्ग्या रचयितेत्याधुनिकविमर्शकैः संशयितः[3] । अपरो योगिनीहृदयदीपिकाकारः[4] । अनयोः प्रथमो बौद्धः क्रिस्तुसंवत्सरेष्वेकोनविंशशतकस्यान्तिमे पादेऽवर्तिष्ट । अतस्तस्यैतद्ग्रन्थकर्तुश्चैकत्वसंभावनाया नैवावकाशः । द्वितीयस्तान्त्रिकः पुण्यानन्दनाथशिष्यश्च । योगिनीहृदयदीपिकालंकारसंग्रहयोः परस्परवचनोदाहरणादर्शनेऽपि तद्रचयित्रोरभेदसंभावनोद्बोधकानि कानिचित् प्रमाणान्युपलभामहे । तथाहि—द्वावपि शैवौ शाक्तौ च । अलंकारसंग्रहकारः स्वग्रन्थस्य प्रारम्भे,

[1] D. No. 12952, P. 8695, Vol. 22 of the Des. Cat. of Sanskrit MSS. in the Govt. Oriental MSS. Library Madras—1918.
Compare with Alaṁkārasaṁgraha, Page 4.

[2] Rasaratnākara, Madras University Publication, Kanarese Series No. 2, Madras 1932. Page 2.

[3] Introduction to the Buddhacarita, edited by E. B. Cowell. Oxford—1893.

[4] Published in the Sarasvati Bhavanam Series No. 7, Banares—1924.

"[1]जगद्वैचित्र्यजननजागरूकपदद्वयम् ।
अवियोगरसाभिज्ञमाद्यं मिथुनमाश्रये ॥"

इत्यर्धनारीश्वरं नमस्यति । एवं तत्रैव

"[2]अवोचदमृतानन्दमादरेण कवीश्वरम् ।"
"मया तत्प्रार्थितेनेत्थममृतानन्दयोगिना ॥"

इत्यात्मानं कविं योगिनं च निर्दिशति । तथा "इत्यमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे" इति परिच्छेदान्तेषु योगिप्रवरबिरुदेनात्मानं निर्दिशति । योगिनीहृदयदीपिकाकारश्च तस्मिन् ग्रन्थे महाकविवचनानामनेकेषां परिशीलनेन सहृदयहृदयावर्जन्या ग्रन्थरचनाशैल्या चात्मनः कवीश्वरतामाविष्करोति । तथा पटलान्तेषु "इत्यमृतानन्दयोगिप्रवरविरचितायां योगिनीहृदयदीपिकायाम्" इति योगिप्रवरबिरुदेनात्मानं निर्दिशन्न केवलमात्मनो योगिप्रवरत्वं, किंत्वलंकारसंग्रहकर्त्रभेदं च विवक्षतीव । योगीश्वरस्याप्यालंकारिकत्वमत्रालंकारसंग्रहारम्भे कर्त्रा स्ववचनेनैवाभ्युपगतमिति नात्र मात्रयापि विमन्तव्यं विमर्शकैः । अतश्च योगिनीहृदयदीपिकालंकारसंग्रहयोरेककर्तृकत्वोद्भावनं संभवद्युक्तिकमेवेति यावन्न बाधस्तावत् साधु । कन्नडवैद्यनिघण्टुकारोऽमृतानन्दीति कश्चनावर्तत[3] । स तु जैनः सुतरामस्माद्भिन्न इति न तत्र शङ्कावकाशः । अलंकारसंग्रहप्रारम्भे "भक्तिभूमिपतिः शास्ति भवपादाब्जषट्पदः[4]" इति निर्देशात् मन्मभूपतेः पिता भक्तिभूपतिः शिवभक्त इति विज्ञायते । अत्र "भवपादाब्जषट्पदः" इत्यस्य स्थाने 'जिनपादाब्जषट्पदः' इति पाठान्तरं कोशान्तरे दृष्टमिति पण्डितवर्येण

[1] Alaṁkārasaṁgraha, Page 1.
[2] Alaṁkārasaṁgraha, P. 2.
[3] The Karnāṭakakavicarite by R. Narasiṁhacarya, Mysore University Publications, Bangalore, 1942. Vol. I., Page 408.
[4] Alaṁkārasaṁgraha, P. 1.

शेषव्यंगार्येणोच्यते। अस्माभिरुपलब्धेषु सर्वेष्वपि कोशेषु भवपादाब्जेति पाठ एवोपलब्ध इति जिनपादाब्जेति काचित्के पाठे नातीव श्रद्धा विहिता।

अलंकारसंग्रहे ग्रन्थकर्त्रानेन नाम्ना निर्दिष्टा ग्रन्थाश्चेमे— १. मारीचवञ्चनम्, २. वालिवधः, ३. उदात्तराघवः, ४. नलविजयः, ५. देवीपरिणयः, ६. त्रिपुरदाहः, ७. अम्भोधिमन्थनम्, ८. मदनलेखा, ९. मेनकानहुषम्, १०. स्तम्भितारम्भम्, ११. रैवतमदनिका, १२. कनकवतीमाधवम्, १३. शृङ्गारललितम्, १४. केलिरैवतकम्, १५. महावीरचरितम्, १६. वेणीसंहारम्, १७. शाकुन्तलम्, १८. बालरामायणम्, १९. विक्रमोर्वशीयम्, २०. कामदत्ता, २१. माधवोदयः, २२. मेनकाद्विजम्, २३. क्रीडारसालम्, २४. वीणावती, २५. बिन्दुमती, २६. विलासवती चेति।

वे. कृष्णमाचार्यः

# CONTENTS


| विषयः | PAGE |
|---|---|
| **प्रथमः परिच्छेदः (वर्णगणविचारः)** | |
| मङ्गलाचरणम् | १ |
| उपोद्घातः | ,, |
| वर्णपदादिविभागः | २ |
| काव्यलक्षणादि | ,, |
| छन्दः | ३ |
| गणाः | ,, |
| वर्णगणविचारः | ,, |
| **द्वितीयः परिच्छेदः (शब्दार्थनिर्णयः)** | |
| कविः | ६ |
| कविभेदाः | ,, |
| कवितानिदानम् | ,, |
| वाक्यार्थः | ७ |
| अर्थनिर्णायकाः | ८ |
| **तृतीयः परिच्छेदः (रसनिर्णयः)** | |
| रसः | १० |
| स्यायिभावाः | ,, |
| रसभेदाः | १० |
| शृङ्गाररसः | ,, |
| रसोत्पत्तिः | ,, |
| रसपोषकाः | ११ |
| विभावाः | ,, |
| अनुभावाः | ,, |
| सात्त्विकभावाः | ,, |
| व्यभिचारिभावाः | ,, |
| रसाश्रयाः | १२ |
| शृङ्गारे विभावादयः | ,, |
| शृङ्गारभेदः | ,, |
| संभोगशृङ्गारः | ,, |
| विप्रलम्भशृङ्गारः | १३ |
| दश दशाः | ,, |
| चक्षुःप्रीतिः | ,, |
| मनःसक्तिः | ,, |
| संकल्पः | ,, |
| जागरः | १४ |
| तनुता | ,, |

| विषयः | PAGE | विषयः | PAGE |
|---|---|---|---|
| विषयद्वेषः . . | १४ | शठः . . . | २५ |
| त्रपानाशः . . | ,, | धृष्टः . . . | ,, |
| मोहः . . . | १५ | अनुकूलः . . . | २६ |
| मूर्च्छा . . . | ,, | षोडश नायकाः . . | ,, |
| मृतिः . . . | ,, | पुनस्त्रिधा नायकाः . | ,, |
| हास्यरसः . . . | ,, | अष्टचत्वारिंशन्नायकाः . | ,, |
| करुणरसः . . . | १६ | नायकसहायाः . . | ,, |
| रौद्ररसः . . . | १७ | पीठमर्दः . . . | ,, |
| वीररसः . . . | १८ | विटः . . . | ,, |
| भयानकरसः . . | १९ | विदूषकः . . . | ,, |
| बीभत्सरसः . . | ,, | प्रतिनायकाः . . | २७ |
| अद्भुतरसः . . | २० | नायकगुणाः . . | ,, |
| शान्तरसः . . | ,, | शोभा . . . | ,, |
| रसानां वर्णा देवताश्च . | २१ | विलासः . . . | ,, |
| रसाद्रसोत्पत्तिः . . | ,, | माधुर्यम् . . . | ,, |
| मिथो वैरिणो रसाः . . | ,, | गाम्भीर्यम् . . | ,, |
| | | स्थैर्यम् . . . | ,, |
| **चतुर्थः परिच्छेदः (नेतृभेदनिर्णयः)** | | तेजः . . . | ,, |
| नेतृसामान्यगुणाः . . | २३ | ललितम् . . . | ,, |
| नायकभेदाः . . | ,, | औदार्यम् . . . | २८ |
| धीरोदात्तः . . | ,, | नायिकाभेदाः . . | ,, |
| धीरललितः . . | २४ | स्वीया . . . | ,, |
| धीरशान्तः . . | ,, | अन्या . . . | ,, |
| धीरोद्धतः . . | ,, | साधारणा . . . | ,, |
| नायकभेदाः . . | २५ | स्वीयमुग्धा . . | २९ |
| दक्षिणः . . | ,, | स्वीयमध्या . . | ,, |

| विषयः | PAGE |
|---|---|
| स्वीयप्रगल्भा | २९ |
| मध्यधीरा | ३० |
| मध्यधीराधीरा | ,, |
| मध्याधीरा | ,, |
| प्रगल्भधीरा | ३१ |
| प्रगल्भधीराधीरा | ,, |
| प्रगल्भाधीरा | ,, |
| षड्विधा मध्या | ३२ |
| षड्विधा प्रगल्भा | ,, |
| नायिकावस्थाः | ,, |
| स्वाधीनपतिका | ,, |
| वासकसज्जिका | ३३ |
| कलहान्तरिता | ,, |
| विप्रलब्धा | ,, |
| प्रोषितभर्तृका | ,, |
| विरहोत्कण्ठिता | ३४ |
| खण्डिता | ,, |
| अभिसारिका | ,, |
| नायिकादूत्यः | ३५ |
| नायिकालंकाराः | ,, |
| सत्त्वम् | ,, |
| भावः | ,, |
| हावः | ३६ |
| हेला | ,, |
| शोभा | ,, |
| कान्तिः | ,, |
| दीप्तिः | ३७ |
| माधुर्यम् | ,, |
| प्रागल्भ्यम् | ,, |
| औदार्यम् | ३८ |
| धैर्यम् | ,, |
| लीला | ,, |
| विलासः | ,, |
| विच्छित्तिः | ३९ |
| विभ्रमः | ,, |
| किलिकिञ्चितम् | ,, |
| मोट्टायितम् | ,, |
| कुट्टमितम् | ४० |
| बिब्बोकः | ,, |
| ललितम् | ,, |
| विहृतम् | ४१ |

पञ्चमः परिच्छेदः (अलंकारनिर्णयः)

| विषयः | PAGE |
|---|---|
| रीतिभेदाः | ४२ |
| गुणाः | ,, |
| श्लेषः | ,, |
| प्रसादः | ,, |
| समता | ,, |
| माधुर्यम् | ,, |
| सुकुमारता | ४३ |
| अर्थव्यक्तिः | ,, |
| उदारता | ,, |

| विषयः | PAGE | विषयः | PAGE |
|---|---|---|---|
| ओजः . . . | ४३ | रसवत् . . . | ९२ |
| कान्तिः . . . | ,, | ऊर्जस्वि . . . | ,, |
| समाधिः . . . | ,, | पर्यायोक्तम् . . | ,, |
| वैदर्भी रीतिः . . | ,, | समाहितम् . . | ९३ |
| गौडी रीतिः . . | ४४ | उदात्तम् . . . | ,, |
| पाञ्चाली रीतिः . . | ,, | अपह्नुतिः . . | ,, |
| लाटी रीतिः . . | ,, | श्लिष्टम् . . . | ९४ |
| रसगुणाः . . . | ४५ | विशेषोक्तिः . . | ,, |
| अर्थालंकाराः . . | ,, | तुल्ययोगिता . . | ,, |
| स्वभावोक्तिः . . | ,, | विरोधः . . . | ,, |
| उपमा . . . | ४६ | अप्रस्तुतस्तुतिः . . | ९५ |
| रूपकम् . . . | ,, | व्याजस्तुतिः . . | ,, |
| दीपकम् . . . | ,, | निदर्शना . . . | ,, |
| आवृत्तिः . . . | ४७ | सहोक्तिः . . . | ९६ |
| आक्षेपः . . . | ,, | परिवृत्तिः . . . | ,, |
| अर्थान्तरन्यासः . . | ,, | आशीः . . . | ,, |
| व्यतिरेकः . . . | ४८ | वक्रोक्तिः . . . | ९७ |
| विभावना . . . | ,, | संकरः . . . | ,, |
| समासोक्तिः . . | ,, | प्रमाणालंकाराः . . | ९७ |
| अतिशयोक्तिः . . | ४९ | प्रत्यक्षम् . . . | ९८ |
| उत्प्रेक्षा . . . | ,, | अनुमानम् . . . | ,, |
| हेतुः . . . | ५० | आगमः . . . | ,, |
| सूक्ष्मः . . . | ,, | उपमानम् . . . | ९९ |
| लवः . . . | ,, | अर्थापत्तिः . . | ,, |
| क्रमः . . . | ५१ | अभावः . . . | ,, |
| प्रेयः . . . | ,, | संभवः . . . | ६० |

| विषयः | PAGE |
|---|---|
| ऐतिह्यम् | ६० |

षष्ठः परिच्छेदः (दोषगुणनिर्णयः)

| विषयः | PAGE |
|---|---|
| पददोषाः | ६२ |
| श्रुतिकटु | ,, |
| असमर्थम् | ,, |
| च्युतसंस्कृति | ६३ |
| अवाचकम् | ,, |
| निरर्थकम् | ,, |
| अप्रयुक्तम् | ६४ |
| अश्लीलम् | ,, |
| ग्राम्यम् | ६५ |
| नेयार्थम् | ,, |
| अनुचितार्थम् | ,, |
| संदिग्धम् | ६६ |
| क्लिष्टम् | ,, |
| अविमृष्टविधेयांशम् | ,, |
| विरुद्धमतिकृत् | ,, |
| अप्रतीतार्थम् | ६७ |
| पदैकदेशदोषाः | ,, |
| श्रुतिकटु | ,, |
| अवाचकम् | ,, |
| निरर्थकम् | ६८ |
| अश्लीलम् | ,, |
| संदिग्धम् | ६९ |
| वाक्यदोषाः | ,, |
| प्रतिकूलवर्णम् | ६९ |
| उपहतलुप्तविसर्गम् | ,, |
| विसंधिभेदाः | ७० |
| वैरूप्यविसंधि | ,, |
| विश्लेषविसंधि | ,, |
| अश्लीलविसंधि | ,, |
| कष्टविसंधि | ७१ |
| हतवृत्तभेदाः | ,, |
| गुरुलघ्वयथात्वम् | ,, |
| हीनवर्णम् | ,, |
| अधिकवर्णम् | ,, |
| भग्नच्छन्दः | ,, |
| न्यूनपदम् | ७२ |
| अधिकपदम् | ,, |
| कथितपदम् | ,, |
| पतत्प्रकर्षम् | ,, |
| समाप्तपुनरात्तम् | ७३ |
| अर्धान्तरैकवाचकम् | ,, |
| अभवन्मतयोगम् | ७४ |
| अनभिहितवाच्यम् | ,, |
| अपदस्थपदम् | ,, |
| अपदस्थसमासम् | ७५ |
| संकीर्णम् | ,, |
| गर्भितम् | ,, |
| प्रसिद्धिहतम् | ७६ |
| भग्नप्रक्रमम् | ,, |

| विषयः | PAGE |
|---|---|
| अक्रमम् | ७७ |
| अमतपरार्थम् | ,, |
| रसच्युतम् | ,, |
| अप्रस्तुतार्थम् | ,, |
| अर्थदोषाः | ७८ |
| अपुष्टः | ,, |
| कष्टः | ,, |
| व्याहतः | ७९ |
| पुनरुक्तः | ,, |
| दुष्क्रमः | ,, |
| ग्राम्यः | ८० |
| संदिग्धः | ,, |
| निर्हेतुः | ,, |
| विरुद्धः | ,, |
| व्यर्थीकृतः | ८१ |
| सनियमः | ,, |
| अनियमः | ८२ |
| विशेषपरिवृत्तः | ,, |
| सामान्यपरिवृत्तः | ,, |
| साकाङ्क्षः | ८३ |
| उक्तविरुद्धः | ,, |
| त्यक्तपुनःस्वीकृतः | ,, |
| अश्लीलः | ८४ |
| विध्यनुवादविवृत्तः | ,, |
| सहचरभिन्नः | ,, |
| दोषाणां गुणत्वम् | ८९ |
| कविसमयविशेषाः | ९० |
| रसदोषाः | ,, |
| रसाभासः | ,, |
| भावाभासः | ,, |
| कष्टकल्पना | ९३ |
| प्रतिकूलग्रहणम् | ,, |


सप्तमः परिच्छेदः (संध्यङ्गनिर्णयः)


| विषयः | PAGE |
|---|---|
| नाट्यप्रशंसा | ९४ |
| रूपकम् | ,, |
| इतिवृत्तम् | ,, |
| इतिवृत्तभेदाः | ,, |
| अर्थप्रकृतयः | ९५ |
| बीजम् | ,, |
| बिन्दुः | ,, |
| पताका | ,, |
| पताकास्थानकम् | ,, |
| प्रकरी | ९६ |
| कार्यम् | ,, |
| कार्यावस्थाः | ,, |
| आरम्भः | ,, |
| यत्नः | ९७ |
| प्राप्त्याशा | ,, |
| नियताप्तिः | ,, |
| फलागमः | ,, |
| संधिः | ९८ |

| विषयः | PAGE | विषयः | PAGE |
|---|---|---|---|
| पञ्च संधयः . . . | ९८ | पुष्पम् . . . | १०५ |
| मुखसंधिः . . . | ,, | वज्रम् . . . | ,, |
| मुखसंध्यङ्गानि . . | ,, | उपन्यासः . . | १०६ |
| उपक्षेपः . . . | ,, | वर्णसंहरणम् . . | ,, |
| परिकरः . . . | ९९ | गर्भसंधिः . . | १०७ |
| परिन्यासः . . | ,, | गर्भसंध्यङ्गानि . . | ,, |
| विलोभनम् . . | ,, | अभूताहरणम् . . | ,, |
| युक्तिः . . . | ,, | मार्गः . . . | ,, |
| प्राप्तिः . . . | १०० | रूपम् . . . | ,, |
| समाधानम् . . | ,, | उदाहरणम् . . | १०८ |
| विधानम् . . . | ,, | क्रमः . . . | ,, |
| परिभावना . . | १०१ | संग्रहः . . . | ,, |
| उद्भेदः . . . | ,, | अनुमानम् . . | १०९ |
| भेदः . . . | ,, | तोटकम् . . . | ,, |
| करणम् . . . | १०२ | अधिबलम् . . | ,, |
| प्रतिमुखसंधिः . . | ,, | उद्वेगः . . . | ,, |
| प्रतिमुखाङ्गानि . . | ,, | संभ्रमः . . . | ११० |
| विलासः . . . | १०३ | आक्षेपः . . . | ,, |
| परिसर्पः . . . | ,, | अवमर्शसंधिः . . | ,, |
| विधूतम् . . . | ,, | अवमर्शाङ्गानि . . | १११ |
| शमः . . . | ,, | अपवादः . . . | ,, |
| नर्म . . . | १०४ | संफेटः . . . | ,, |
| नर्मद्युतिः . . . | ,, | विद्रवः . . . | ,, |
| प्रगमनम् . . . | ,, | द्रवः . . . | ११२ |
| निरोधनम् . . | १०५ | शक्तिः . . . | ,, |
| पर्युपासनम् . . | ,, | द्युतिः . . . | ११३ |

| विषयः | PAGE |
|---|---|
| प्रसङ्गः | ११३ |
| छलनम् | ,, |
| व्यवसायः | ११४ |
| विरोधनम् | ,, |
| प्ररोचना | ११५ |
| विचलनम् | ,, |
| आदानम् | ११६ |
| निर्वहणसंधिः | ,, |
| निर्वहणाङ्गानि | ,, |
| संधिः | ,, |
| विरोधः | ,, |
| ग्रथनम् | ११७ |
| निर्णयः | ,, |
| परिभाषणम् | ,, |
| प्रसादः | ११८ |
| आनन्दः | ,, |
| समयः | ,, |
| धृतिः | ११९ |
| भाषणम् | ,, |
| उपगुम्भनम् | ,, |
| पूर्वभावः | ,, |
| उपसंहारः | १२० |
| प्रशस्तिः | ,, |
| वस्तुनस्त्रैविध्यम् | ,, |
| विष्कम्भः | १२१ |
| चूलिका | ,, |
| अङ्कास्यम् | १२१ |
| अङ्कावतारः | ,, |
| प्रवेशकः | ,, |
| प्रकाशम् | १२२ |
| स्वगतम् | ,, |
| जनान्तिकम् | ,, |
| अपवारितम् | ,, |
| आकाशभाषितम् | ,, |

अष्टमः परिच्छेदः (वृत्तिनिरूपणम्)

| विषयः | PAGE |
|---|---|
| वृत्तिः | १२३ |
| वृत्तिभेदाः | ,, |
| भारती वृत्तिः | ,, |
| भारत्यङ्गानि | ,, |
| सात्त्वती वृत्तिः | ,, |
| सात्त्वत्यङ्गानि | १२४ |
| संलापकः | ,, |
| उत्थापकः | ,, |
| संघः | ,, |
| परिवर्तकः | १२५ |
| आरभटी वृत्तिः | ,, |
| आरभव्यङ्गानि | ,, |
| संक्षिप्तिः | ,, |
| संफेटः | १२६ |
| वस्तूत्थापनम् | ,, |
| अवपातनम् | ,, |

| विषयः | PAGE |
|---|---|
| कैशिकी वृत्तिः | १२६ |
| कैशिक्यङ्गानि | १२७ |
| नर्म | ,, |
| नर्मस्पन्दः | ,, |
| नर्मस्फोटः | १२८ |
| नर्मगर्भः | ,, |
| रसानुगुणा वृत्तयः | ,, |
| भाषानियमः | १२९ |
| संबोधनक्रमः | ,, |

नवमः परिच्छेदः (रूपकनिरूपणम्)

| विषयः | PAGE |
|---|---|
| रूपकाणि | १३१ |
| उपरूपकाणि | ,, |
| नाटकम् | ,, |
| रङ्गनेपथ्ये | ,, |
| पूर्वरङ्गः | १३२ |
| तदङ्गानि | ,, |
| नान्दी | ,, |
| तत्र पदनियमादि | १३३ |
| प्ररोचना | १३४ |
| आमुखम् | ,, |
| तदङ्गानि | ,, |
| कथोद्घातः | ,, |
| प्रवृत्तकम् | १३५ |
| प्रयोगातिशयः | ,, |
| वीथ्यङ्गानि | ,, |
| नाट्यसाधारणाङ्गानि | १३६ |
| संज्ञानियमः | ,, |
| आधिकारिकेतिवृत्तम् | ,, |
| संधिनियमः | ,, |
| नाटके विष्कम्भः | १३७ |
| अङ्कलक्षणम् | ,, |
| नाटके रसः | ,, |
| तत्रादर्शनीयानि | १३८ |
| तत्राङ्कसंख्या | ,, |
| प्रकरणम् | ,, |
| तत्र नायकः | ,, |
| तत्र नायिका | १३९ |
| प्रकरणभेदाः | ,, |
| तत्र संख्यादि | ,, |
| भाणः | ,, |
| तत्र नायकः | ,, |
| तत्र रसः | ,, |
| तत्र वृत्त्यादयः | ,, |
| तत्र संधयः | १४० |
| लास्याङ्गानि | ,, |
| गेयपदम् | ,, |
| स्थितपाठ्यम् | ,, |
| आसीनम् | १४१ |
| पुष्पगन्धिका | ,, |
| प्रच्छेदकः | ,, |
| त्रिमूढम् | १४२ |

| विषयः | PAGE | विषयः | PAGE |
|---|---|---|---|
| सैन्धवम् . . . | १४२ | असत्प्रलापः . . | १५२ |
| द्विमूढम् . . . | ,, | व्याहारः . . . | १५३ |
| उत्तमोत्तमकम् . . | १४३ | मृदवम् . . . | ,, |
| उक्तप्रत्युक्तम् . . | ,, | उत्सृष्टिकाङ्कः . . | ,, |
| प्रहसनम् . . . | ,, | ईहामृगः . . . | १५४ |
| डिमः . . . | १४४ | नाटिका . . . | ,, |
| व्यायोगः . . . | ,, | सट्टकम् . . . | ,, |
| समवकारः . . | ,, | त्रोटकम् . . . | १५५ |
| वीथी . . . | १४५ | प्रेक्षणकम् . . | ,, |
| वीथ्यङ्गानि . . | ,, | गोष्ठी . . . | ,, |
| उद्घात्यकम् . . | १४६ | भाणिका . . . | १५६ |
| अवलगितम् . . | ,, | तदङ्गानि . . | ,, |
| प्रपञ्चः . . . | १४७ | संलापः . . . | ,, |
| त्रिगतम् . . . | १४८ | तदङ्गानि . . . | ,, |
| छलम् . . . | ,, | प्रस्थानम् . . . | १५७ |
| वाक्केली . . | ,, | काव्यम् . . . | ,, |
| अधिबलम् . . | १४९ | हल्लीसकम् . . | ,, |
| गण्डम् . . . | ,, | रासकम् . . . | १५८ |
| तद्भेदाः . . . | १५० | श्रीगदितम् . . | ,, |
| प्रतिहारः . . . | ,, | लासिका . . . | ,, |
| रहः . . . | ,, | दुर्मल्लिका . . | ,, |
| हर्षः . . . | ,, | नाट्यरासकम् . . | १५९ |
| प्रतिभा . . . | १५१ | उल्लाप्यम् . . | ,, |
| व्याहतः . . . | ,, | दशमः परिच्छेदः (नाट्यालंकार-निरूपणम्) | |
| अवस्यन्दितम् . . | ,, | | |
| नालिका . . . | १५२ | नाट्यालंकाराः . . | १६० |

| विषयः | PAGE |
|---|---|
| सिद्धिः | १६० |
| प्राप्तिः | १६१ |
| विचारः | ,, |
| अनुनयः | ,, |
| उद्दिष्टम् | ,, |
| दाक्षिण्यम् | १६२ |
| प्रसिद्धिः | ,, |
| गर्हणम् | ,, |
| पश्चात्तापः | ,, |
| स्पृहा | १६३ |
| क्षोभः | ,, |
| आक्रन्दः | ,, |
| परिहारः | ,, |
| नीतिः | १६४ |
| उत्तेजनम् | ,, |
| शोभा | ,, |
| अभिमानः | ,, |
| संशयः | १६५ |
| तुल्यतर्कः | ,, |
| अक्षमा | ,, |
| व्यवसायः | ,, |
| विमर्शः | ,, |
| युक्तिः | १६६ |
| प्रोत्साहनम् | ,, |
| साहाय्यम् | ,, |
| निवेदनम् | १६७ |
| अभिज्ञानम् | १६७ |
| पृच्छा | ,, |
| अतिशयः | ,, |
| गुणकीर्तनम् | १६८ |

**एकादशः परिच्छेदः (चाटुप्रबन्ध-निरूपणम्)**

| विषयः | PAGE |
|---|---|
| मुक्तकादिविभागः | १६९ |
| उदाहरणम् | ,, |
| विभक्तिदेवताः | १७० |
| उदाहरणे नायकाः | १७१ |
| अङ्गुली | ,, |
| कल्याणी | ,, |
| उत्फुल्लकवती | ,, |
| फलोदाहरणम् | ,, |
| विभक्तिनामानि | ,, |
| नवमाणिक्यमाला | ,, |
| नक्षत्रमाला | १७२ |
| भोगावली | ,, |
| बिरुदावली | १७३ |
| गुणावली | १७४ |
| तत्र रसः | ,, |
| रगला | १७५ |
| चक्रवालम् | ,, |
| लोकोत्तरम् | ,, |
| त्यागघोषणम् | ,, |

## ERRATA

| Page | Line | Reading | Page | Line | Reading |
|---|---|---|---|---|---|
| २ | ३ | संकीर्णास्तत्र | ५४ | ४ | मानसगराज |
| ११ | १ | रसोदय: | ,, | ५ | विशेषोक्ति: |
| १६ | २ | पार्णि | ६३ | १३ | नादातृवाचकम् |
| १७ | ७ | चिन्तायाः | ८५ | ४ | सममंस्त |
| ३० | १२ | खेदोऽस्मासु | ८६ | १७ | रोमोद्गमा |
| ३२ | १५ | स्वाधीन | ८८ | १९ | वासरवध: |
| ३४ | १७ | वीक्षमाणा: | ८९ | ३ | गर्हितमपि |
| ३६ | १४ | वलितापाङ्गां | ११९ | ४ | साक्षिणि |
| ३८ | ७ | रात्रौ रात्रा | १२९ | १५ | ज्येष्ठमध्या |
| ४५ | १० | उत्प्रेक्षा: | १३३ | ४ | अष्टादशभि: |
| ४६ | १० | एकत्वरूपणं | १३८ | १२ | मारीचवञ्चनम् |
| ४९ | ८ | तुन्दिलापया | १७० | १४ | आर्यो |
| ५३ | ११ | शिरश्छेद | १९१ | ७ | आयत्तरमणा |

# अलंकारसंग्रहः

## अमृतानन्दयोगिकृतः

## प्रथमः परिच्छेदः

मङ्गलाचरणम्—

जगद्वैचित्र्यजननजाकरूकपदद्वयम् ।
[1]अवियोगरसाभिज्ञमाद्यं मिथुनमाश्रये ॥ १ ॥
[2]विद्वज्जनमनःकान्तकैरवानन्दकौमुदीम् ।
नमामि शारदां देवीं नामरूपाधिदेवताम् ॥ २ ॥

उपोद्घातः—

उद्दामफलदामुर्वीमुर्वीमुदधिमेखलाम् ।
भक्तिभूमिपतिः शास्ति भवपादाब्जषट्पदः ॥ ३ ॥
तस्य [3]पुत्रस्त्यागमहासमुद्रबिरुदाङ्कितः ।
सोमसूर्यकुलोत्तंसो महितो [4]मन्नभूपतिः ॥ ४ ॥
[5]स कदाचित्सभामध्ये काव्यालापकथान्तरे ।
[6]अवोचदमृतानन्दमादरेण कवीश्वरम् ॥ ५ ॥

[1] अनियोग G. 2.
[2] समुल्लासरसाकारां तत्त्वकैरवकौमुदीम् G. 1.
[3] पुत्रश्चागमवित्समुद्र etc. G. 1.
[4] मन्व G. 1.
[5] सत्काव्यवित् G. 1.
[6] अपृच्छत् A.

वर्णशुद्धिं वाक्यवृत्तिं रसान् भावाननन्तरम् ।
नेतृभेदानलंकारान् दोषानपि च तद्गुणान् ॥ ६ ॥
[1]नाट्यधर्मान् [2]रूपकोपरूपकाणां भिदा अपि ।
चाटुप्रबन्धभेदांश्च संकीर्णांस्तत्र तत्र तु ॥ ७ ॥
संचित्यैकत्र कथय सौकर्याय सतामिति ।
मया तत्प्रार्थितेनेत्थममृतानन्दयोगिना ॥ ८ ॥
तन्त्रान्तरोदितानर्थान् वाक्यान्येव[3] क्वचित्क्वचित् ।
संचित्य क्रियते सम्यक् सर्वालंकारसंग्रहः ॥ ९ ॥

वर्णपदादिविभागः—

अकारादिक्षकारान्ता [4]वर्णाः स्युः पदतां गताः ।
पदानि द्विविधानि स्युः सुप्तिङन्तविभेदतः ॥ १० ॥
संचयान् सुप्तिङन्तानां वाक्यान्याहुर्विपश्चितः ।

काव्यलक्षणादि—

तान्येव कविक्लृप्तानि सार्थानि [5]सगुणानि च ॥ ११ ॥
सालंकाराणि निर्दोषाण्याहुः [6]काव्यं महर्षयः ।
पद्यं गद्यं च मिश्रं च त्रिविधं काव्यमुच्यते ॥ १२ ॥
पद्यं तु च्छन्दसा बद्धं गद्यं वाक्यकदम्बकम् ।
गद्यपद्यात्मकं मिश्रं नाटकादिकमुच्यते ॥ १३ ॥
सर्गबन्धं संस्कृतेन साश्वासं प्राकृतेन तु ।
तद्द्वयं [7]च महाकाव्यं सेतुरामायणादिकम् ॥ १४ ॥

[1] नाट्यभेदान् G. 1.   [2] नाटकोप G. 1.   [3] वाक्येनैव G. 1.
[4] वर्णास्तु G. 1.   [5] सरसानि च G. 1.   [6] सर्वे विपश्चितः G. 1.
[7] तु G. 1.

गद्यं तु गदितं द्वेधा कथा चाख्यायिकेति च ।
कथा कल्पितवृत्तान्ता सत्यार्थाख्यायिका मता ॥ १५ ॥
[1]उच्छ्वासलम्बकाद्याढ्यं गद्यते गद्ययोर्द्वयम्[2] ।
मिश्रमङ्काद्यङ्कितं स्याद्भाषाभिर्बहुभिर्युतम् ॥ १६ ॥
आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम् ।
नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ॥ १७ ॥
उद्यानसलिलक्रीडामधुपानरतोत्सवैः ।
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ॥ १८ ॥
मन्त्रद्यूतप्रयाणाजिनायकाभ्युदयैरपि ।
अलंकृतमसंक्षिप्तं रसभावनिरन्तरम् ॥ १९ ॥
चतुर्वर्गफलायत्तं चतुरोदात्तनायकम् ।
काव्यं कल्पान्तरस्थायि कल्पतेऽनल्पभूतये ॥ २० ॥

छन्दः—

छन्दो यरतमैर्व्याप्तं तथा भजसनैरपि ।

गणाः—

गुरुणा लघुना व्याप्ता गणास्तल्लक्षणं यथा ॥ २१ ॥
आदिमध्यावसानेषु यरता यान्ति लाघवम् ।
भजसा गौरवं यान्ति मनौ तु गुरुलाघवम् ॥ २२ ॥

वर्णगणविचारः—

[3]वर्णं गणं च काव्यस्य मुखे कुर्यात्सुशोभनम् ।
कर्तृनायकयोस्तेन कल्याणमपि जायते ॥ २३ ॥
अन्यथानिष्टसंपत्तिरनयोरेव संभवेत् ।

[1] उच्छ्वासस्तबकाद्याढ्यं G. 1. [2] द्वयोः G. 2. [3] वर्णान् गणांश्च A.

तद्वर्णानां गणानां च शुद्धिर्ज्ञेया क्रमाद्यथा ॥ २४ ॥
आभ्यां भवति संप्रीतिर्मुदीभ्यां धनमूद्वयात् ।
ऋभ्यां लृभ्यामपख्यातिरेचः सुखकरा मताः ॥ २५ ॥
बिन्दुसर्गङञाः सन्ति पदादौ न कदाचन ।
चतुर्भ्यः कादिवर्णेभ्यो लक्ष्मीरपयशस्तु चात् ॥ २६ ॥
प्रीतिः सौख्यं च छान्मित्रलाभौ जो भयमृत्युकृत् ।
झष्ठाभ्यां खेददुःखे शोभाशोभाकरौ डढौ ॥ २७ ॥
भ्रमणं णात्सुखं तात्तु थाद्युद्धं सुखदौ दधौ ।
नः प्रतापी भयासौख्यमरणक्लेशदाहकृत् ॥ २८ ॥
पवर्गो यस्तु लक्ष्मीदो रो दाही व्यसनं लवौ ।
शः सुखं तनुते षस्तु खेदं सः सुखदायकः ॥ २९ ॥
हो दाहकृद्व्यसनदो ळः क्षः सर्वसमृद्धिदः ।
एवं प्रत्येकतः प्रोक्तं वर्णानां वास्तवं फलम् ॥ ३० ॥
संयोगः [1]सर्वथा त्याज्यो वर्णानां [2]क्षं विना मुखे ।
शुद्धमप्यन्यसंयुक्तमशुद्धमुपजायते ॥ ३१ ॥
यथा मधु घृतोन्मिश्रं विषतामेति वीर्यतः ।
गणानां [3]तु फलं ज्ञेयं प्रत्येकं प्रोच्यते यथा ॥ ३२ ॥
यो वारिरूपो धनकृद्रोऽग्निर्दाहभयंकरः ।
ऐश्वर्यदो [4]नाभसस्तो भः [5]सौम्यः सुखदायकः[6] ॥ ३३ ॥
जः सूर्यो रोगदः प्रोक्तः सो वायव्यः क्षयप्रदः ।

[1] सर्वदा A.
[2] कविना G. 1.
[3] लक्षणं A.
[4] नाभसस्तु G. 1.
[5] सौख्यं G. 1.
[6] शशिदैवतः G. 1.

शुभदो मो भूमिमयो नो गौर्धनकरो मतः ॥ ३४ ॥
देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥ ३५ ॥
[1]एवं वर्णगणव्याप्तिः समाना गद्यपद्ययोः ।
संस्कृते प्राकृतादौ च विज्ञेया विबुधोत्तमैः ॥ ३६ ॥
एवं विनिश्चितविनिर्मलवर्णवाक्यै-
    र्हृद्यानवद्यरचितैर्नवगद्यपद्यैः ।
स्फूर्तिं प्रयातु भवतो भुवनेषु कीर्तिः
    कौतूहलानि तव सन्तु वराङ्कभीम ॥ ३७ ॥

इति [2]श्रीमदमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे
वर्णगणविचारो नाम प्रथमः परिच्छेदः ॥

---

[1] इति G. 1.

[2] अमृतानन्दविरचिते सर्वालंकारसंग्रहे A.

## द्वितीयः परिच्छेदः

कविः—

एवं वर्णगणव्याप्तिविचारणविचक्षणः ।
कवित्वकारणस्तोमसंपन्नः कविरुच्यते ॥ १ ॥

कविभेदाः—

रौचिको वाचिकश्चार्थः शिल्पिको मार्दवानुगः ।
[1]विवेकी भूषणार्थी च कवयः सप्त कीर्तिताः ॥ २ ॥
[2]आवापोद्धारकृद्यावन्मनसो रुचिरात्मनः ।
रौचिको वाचिकः शुद्धवागाडम्बरकारकः ॥ ३ ॥
आर्थोऽभिधेयचित्रार्थी[3] शिल्पिकः शब्दचित्रकृत् ।
शब्दार्थमार्दवापेक्षी कविः स्यान्मार्दवानुगः ॥ ४ ॥
शब्दार्थगुणदोषज्ञो महाकविमतानुगः ।
[4]शास्त्रालंकारसंस्कारी विवेकी कविपुंगवः ॥ ५ ॥
अलंकारैकनिघ्नो[5] यो भूषणार्थी बुधैर्मतः ।

कवितानिदानम्—

शक्तिर्निदानं काव्यस्य [6]कथ्यते काव्यवेदिभिः[7] ॥ ६ ॥
शब्दच्छन्दोऽभिधानादिशास्त्रलोकावलोकनम्[8] ।

[1] कविपुंगवो भूषार्थी A.
[2] आवापोद्वापकृत् G. 1.
[3] चित्रार्थः A.
[4] शास्त्रालंकारशब्दार्थकौतुकी A.
[5] निष्ठो A.
[6] गद्यते A.
[7] कोविदैः G. 1.
[8] सर्वशास्त्रावलोकनम् A.

नैपुणं कविशिक्षा च त्रितयं काव्यकारणम् ॥ ७ ॥
न जातु जायते काव्यं यां विना कारणैरपि ।
शब्दच्छन्दोऽभिधानाद्यैः सा शक्तिरभिधीयते ॥ ८ ॥
[1]सा देवताप्रसादाच्च कल्प्यते कविसंततेः ।
शब्दच्छन्दोऽभिधानानां न विधिः संग्रहादिह ॥ ९ ॥
तेषां स्वरूपमन्यत्र बोद्धव्यं बुद्धिशालिभिः ।

चतुर्विधा वाक्यार्थाः—

वाक्यानां कविक्लृप्तानामर्थाः प्रोक्ताश्चतुर्विधाः ॥ १० ॥
मुख्यो लक्ष्यस्तथा गौणो व्यङ्ग्यश्चेतीह कथ्यते ।
स मुख्यः कथितः साक्षात्संकेतेनाभिधीयते ॥ ११ ॥
जातिक्रियागुणद्रव्यभेदात्सोऽपि चतुर्विधः ।
गौश्चलो धवलो डित्थ इत्युदाहरणं मतम् ॥ १२ ॥
वाच्यार्थानुपपत्तौ यस्तत्संबन्धी प्रतीयते ।
प्रयोजनवशादन्यो लक्ष्योऽर्थो लक्षणा त्रिधा ॥ १३ ॥
वाच्यार्थस्य परित्यागादन्योऽर्थो यत्र लक्ष्यते ।
सा जहल्लक्षणा ज्ञेया गङ्गायां घोष इत्यसौ ॥ १४ ॥
वाच्यार्थस्यापरित्यागादन्योऽर्थो यत्र लक्ष्यते ।
अजहल्लक्षणा कुन्ताः प्रविशन्तीति सा मता ॥ १५ ॥
जहती चाप्यजहती स्वार्थं या तूभयात्मिका ।
सा छत्रिणो व्रजन्तीति [2]ह्यत्रोदाहरणं मतम् ॥ १६ ॥
एकेन च्छत्रिणान्येषां छत्रित्वमिह [3]साधनात् ।

[1] जातमप्यपहासाय कल्पते G. 1.
[2] तत्रोदाहरणं A.
[3] लक्ष्यते A.

स गौणो गुणसादृश्यादन्योऽर्थो यः प्रतीयते ॥ १७ ॥
उदाहरणमेतस्य सिंहो माणवको यथा ।
मुख्यार्थबाधे तद्योगाद्व्यङ्ग्यो लक्ष्यस्य यत्फलम् ॥ १८ ॥
नायं मुख्यो न वा लक्ष्यो लक्षणायाः फलं यतः ।
गङ्गा मुख्यस्तटं लक्ष्यो व्यङ्ग्यं शीतलतादिकम् ॥ १९ ॥
अनेकवाचकः शब्दो [1]यत्रावाच्यं व्यनक्ति तत् ।
व्यञ्जनं त्वभिधामूलं संयोगादिभिरुच्यते ॥ २० ॥

अर्थनिर्णायकाः—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं [2]लिङ्गं शब्दस्यान्यस्य संनिधिः ॥ २१ ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ २२ ॥
सवज्रो हरिरित्यत्र योगादिन्द्रः प्रतीयते ।
अवज्रो हरिरित्यत्र वियोगादपि वासवः ॥ २३ ॥
साहचर्याद्दाशरथौ रामलक्ष्मणयोरिति ।
रामोऽर्जुनविरोधीति विरोधाद्भार्गवो मतः ॥ २४ ॥
स्थाणुं भज जगद्वन्द्यमित्यर्थेन शिवो मतः ।
युष्मदर्थः प्रकरणाद्देवो जानाति मामिति ॥ २५ ॥
कन्तुर्मीनध्वज इति लिङ्गात्कामः प्रतीयते ।
देवः पुरारिरित्यन्यशब्दसंनिधितः शिवः ॥ २६ ॥
मत्तः पिको मधावत्र सामर्थ्यात्सुरभावृतौ ।
औचित्यात्पातु वः शंभुरिति सांमुख्यमिष्यते ॥ २७ ॥

[1] यत्र वाच्यं G. 2.   [2] लिङ्गमन्यशब्दस्य A.

अत्र देवो राजतीति देशाद्राजावगम्यते ।
चित्रभानुर्विभातीति कालेनार्थोऽवसीयते ॥ २८ ॥
रात्रौ चेदनलो ज्ञेयो दिवा चेत्तिग्मदीधितिः ।
मित्रं विभातीति सुहृन्मित्रो भातीति भास्करः ॥ २९ ॥
पुंनपुंसकयोर्व्यक्त्या[1] व्यज्यते तौ यथाक्रमम् ।
स्वरेण व्यक्तिरर्थस्य वेदे काव्येषु न क्वचित् ॥ ३० ॥
एतावन्मात्रनेत्रेति चेष्टयार्थोऽवगम्यते[2] ।
अर्थाश्च व्यञ्जकास्तस्य सहकारितया मताः ॥ ३१ ॥
निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥ ३२ ॥
[3]वक्तात्र यजमानश्चेत्कालो होमस्य गम्यते ।
विटश्चेदत्र बोद्धव्यो वेश्याभिगमनोद्यमः ॥ ३३ ॥
चपले लोचने नालं मनश्चलयितुं मम ।
इत्यर्थव्यक्तिरेतस्मिन् काका वाक्येऽवसीयते ॥ ३४ ॥
इत्यादिरेषां विस्तारः संग्रहादिह नोच्यते ।
दिङ्मात्रं दर्शितं प्राज्ञैरनुक्तमवगम्यताम् ॥ ३५ ॥
विविधविहितवाक्यवृत्तिभेदैः कविवरकल्पितनव्यकाव्यबन्धैः[4] ।
प्रभवतु भवतः प्रतापभानुः समरनिरङ्कुश नूत्नसाहसाङ्क ॥३६॥

इति [5]श्रीमदमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे
शब्दार्थनिर्णयो नाम द्वितीयः परिच्छेदः ।

---

[1] व्यक्तौ G. 1.

[2] विभाव्यते G. 1.

[3] द्रष्टात्र G. 1.

[4] पद्यकाव्यबन्धैः G. 1.

[5] सर्वालंकारसंग्रहे A.

# तृतीयः परिच्छेदः

आत्मनो मनसा योगे मनसस्त्विन्द्रियैः सह ।
इन्द्रियाणां तत्तदर्थैरिति ज्ञानोदयक्रमः ॥ १ ॥

रसः—

ज्ञायमानैर्विभावाद्यैर्व्यक्तः स्थायी रसः स्मृतः ।
भावस्तु मनसो वृत्तिभेदः स्थैर्यमुपेयिवान् ॥ २ ॥

स्थायिभावभेदाः—

रतिर्हासस्तथा शोकः क्रोधोत्साहौ भयं तथा ।
जुगुप्साविस्मयशमाः स्थायिभावा नव क्रमात् ॥ ३ ॥

रसभेदः—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताख्या रसभेदा नव क्रमात् ॥ ४ ॥

शृङ्गाररसः—

पोष्यमाणा रतिर्भावैः शृङ्गार इति गीयते[1] ।
एवमेव स्थायिनोऽन्ये रसतां प्राप्नुवन्ति हि ॥ ५ ॥

रसोत्पत्तिः—

नवनीतं यथा पाकाद् घृतत्वं प्रतिपद्यते ।
श्रूयमाणैर्विभावाद्यैः काव्येषु रससंभवः ॥ ६ ॥

[1] कथ्यते G. 1.

दृश्यमानैः सदस्यानां नाटकेषु रसादयः ।

रसपोषकाः—

विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः ॥ ७ ॥
श्रोतॄणां प्रेक्षकाणां च ते सर्वे रसपोषकाः ।

विभावभेदः—

आलम्बनत्वेनोद्दीपनत्वेन[1] द्विविधा मताः ॥ ८ ॥
विभावा यैर्विशेषेण रसव्यक्तिर्विभाव्यते ।
आलम्बनविभावः स यमालम्ब्य रसोदयः ॥ ९ ॥
उद्दीप्यते रसो भावैर्यैस्त [2]उद्दीपना मताः ।

अनुभावाः—

उत्पन्नो यै रसो भावैर्भावुकैरनुभूयते ॥ १० ॥
तेऽनुभावाः [3]प्रकथ्यन्ते विकारा अङ्गसंभवाः ।

सात्त्विकभावाः—

सत्त्वं नाम मनोवृत्तिः सात्त्विकास्तत्समुद्भवाः ॥ ११ ॥
स्तम्भः स्वेदोऽथ रोमाञ्चलयौ वैस्वर्यवेपथू ।
अश्रुवैवर्ण्यमित्यष्टौ भावाः प्रोक्ता मनीषिभिः ॥ १२ ॥

व्यभिचारिभावाः—

भावे स्थायिन्यनैकान्त्याच्चरन्तो व्यभिचारिणः ।
उत्पद्यन्ते विलीयन्ते वारिधाविव वीचयः ॥ १३ ॥
निर्वेदग्लानिशङ्काश्रमधृतिजडताहर्षदैन्यौग्र्यचिन्ता-
त्रासेर्ष्यामर्षगर्वस्मृतिमरणमदाः सुप्तिनिद्रावबोधाः ।

[1] द्दीपनत्वाद्विभावो द्विविधो मतः G. 1. [2] उद्दीपनो मतः G. 1.
[3] प्रकीर्त्यन्ते G. 1.

व्रीडापस्मारमोहास्स्वमतिरलसतावेगतर्कावहित्था
व्याद्ध्युन्मादौ विषादोत्सुकचपलयुतास्त्रिंशदेते त्रयश्च ॥१४॥

रसाश्रयाः—

नटेषु रसभावानामारोप्यत्वादतत्त्वतः ।
रसः सामाजिकेष्वेव [1]स स्वभावरसः स्मृतः ॥ १५ ॥
प्राणिनामपि सर्वेषां लोके [2]स्वाभाविको रसः ।

शृङ्गारे विभावादयः—

अन्योन्यालम्बनत्वं स्यात्कान्ताकामुकयो रसे ॥ १६ ॥
उद्दीपनाः स्युः शृङ्गारे चन्द्रिकोपवनादयः ।
अनुभावाः प्रकीर्त्यन्ते कटाक्षक्षेपणादयः ॥ १७ ॥
स्तम्भादयः सात्त्विकाः स्युर्दर्शनस्पर्शनादिषु ।
निर्वेदाद्या यथाथोगं योज्याः संचारिणोऽपि च ॥ १८ ॥

शृङ्गारभेदः—

संभोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः ।
संभोगः संनिकर्षः स्याद्भाषणाद्यैर्मिथो यथा ॥ १९ ॥

संभोगशृङ्गारः—

"व्रीडाकातरलोचनं विनमितं वक्त्रं विशद्वेपथू
हस्तौ हल्लकसोदरौ पुलकितैः स्पृष्टौ तवेमौ स्तनौ ।
तन्वी तारकिता तनुस्तनुतरैः स्वेदाम्भसां शीकरै-
र्भावो भावजराज्यलक्ष्मि विदितो बाह्यैरलं डम्बरैः ॥"

[1] स्वस्वभावरसः स्मृतेः G. 1.

[2] स्वाभाविका रसाः A.

विप्रलम्भश्रृङ्गारः—

विप्रलम्भोऽभिलाषेर्ष्याप्रवासाद्यैरनेकधा ।
उदाहरणमेतेषामष्टावस्थासु लक्ष्यते ॥ २० ॥

दश दशाः—

रत्युल्लाससमुद्भूता विद्यन्तेऽत्र दशा दश ।
चक्षुःप्रीतिर्मनःसक्तिः संकल्पो जागरस्तथा ॥ २१ ॥
तनुता विषयद्वेषस्त्रपानाशस्ततः परम् ।
मोहो मूर्च्छा मृतिरिति विज्ञेयाः प्रथमा यथा ॥ २२ ॥
आदराद्वीक्षणं यत्र चक्षुःप्रीतिः प्रशस्यते ।

चक्षुःप्रीतिः—

सामिप्रफुल्लसरसीरुहकोणनिर्य-
न्मत्तद्विरेफमहिलागतिगर्वचोरैः ।
लज्जालसैर्ललितभावभवैः कटाक्षैः
सा त्वामवैक्षत सखी मम **मन्नभूप** ॥

मनःसक्तिः—

चित्तासक्तिर्मुहुश्चिन्ता प्रतिकृत्यादिभिर्यथा ॥ २३ ॥

त्वां **मन्नभूप** लिखितुं त्रपयासमर्था
सा संनिधौ मम चिरादलिखद्विचिन्त्य ।
पद्मद्वयं करिकरौ गगनं कवाटं
साम्भोरुहं युगयुगं शशिनं तमश्च ॥

संकल्पः—

मनोरथैः प्रियावाप्तिः संकल्पः कथितो यथा ।

आमीलिताक्षमलकाकुलफालभाग-
मास्विन्नगण्डमधरस्फुरणाभिरामम् ।

पाणौ निधाय वदनं परभागशालि
**मन्नक्षितीश** रतिमेति मनोरथैः सा ॥

जागरः—

**प्रियानवाप्त्या तच्चिन्तासातत्याज्जागरो यथा ॥ २४ ॥**

राकाविधोरपि रवेरविशेषतापात्
सा जागरादपि सखी मम **मन्नभूप** ।
जानाति नान्तरमनन्यजबाणजालै-
र्दीना निशादिवसयो**र्दिननाथवंश्य** ॥

तनुता—

**तदलाभात्तनोः कामज्वरेण तनुता यथा ।**

**भक्तीशनन्दन** भवद्विरहे मृगाक्षी
**मन्नक्षितीश** मदनज्वरकर्शिताङ्गी ।
लब्धुं त्वदीयहृदये ललितेऽवकाशं
कार्श्यं निजं कलयते कमनीयमेव ॥

विषयद्वेषः—

**अर्थान्तरासहिष्णुत्वं विषयद्वेषणं यथा ॥ २५ ॥**

आलापमालिनिकरस्य निशम्य भीता
मुग्धा विलोक्य वदनं मुकुरं जहाति ।
मन्दं न निश्वसिति मन्मथवेदनार्ता
कीरेन्दुमारुतधिया किमु **मन्नभूप** ॥

त्रपानाशः—

**मानत्यागस्त्रपानाशो गौरवागणनाद्यथा ।**

मन्दा वहन्ति मलयाचलगन्धवाहा
मत्ता नदन्ति मकरन्दरसेन भृङ्गाः ।

मानं जहाति मदनाशुगपातभीता
मन्नक्षितीश भजते न मरालयानम् ॥

मोहः—

**उन्मादश्चित्तवैकल्यान्मोह इत्युच्यते यथा ॥ २६ ॥**

आलोलपल्लववतीमवलम्ब्य शाखा-
मागम्यतामिति शनैरनुनीय चूतम् ।
नेत्राम्बु सा त्यजति नेतुमपारयन्ती
कोपेन मन्ननृपते कोमराङ्कभीम ॥

मूर्च्छा—

**आहुरिन्द्रियवैकल्यान्मूर्च्छा ज्ञानक्षयो यथा ।**

मुग्धा मुहुः पिहितमन्मथबाणपीडां
मूर्च्छा सखी मृगयते मम मन्नभूप ।
विज्ञातवेदनविशेषतया विवेकं
नाङ्गीकरोति नयने विनिमीलयन्ती ॥

मृतिः—

**क्षणान्तरे प्राणहानिः प्रियालाभान्मृतिर्यथा ॥ २७ ॥**

पुण्यं पुरातनमिहास्ति यदि त्वदीय-
मङ्कं विशङ्कमधिरोढुमरालकेश्याः ।
कामो नयेन्न दशमीमियताप्यवस्थां
कालेन मन्ननृपते करुणापरस्ताम् ॥

हास्यरसः—

**हास एव विभावाद्यैः पुष्टो हास्यत्वमागतः ।**
**विदूषकादिरालम्बो भावो हास्यरसे यथा ॥ २८ ॥**

" संमार्जनीसततसंगमनादपूतं
पर्णि पवित्रितकचे बहुतीर्थतोयैः ।
मन्मस्तकेऽर्पितवती मधुपानमत्ता
वित्तस्य दानमिह किंनु विमाननाय ॥"

उद्दीपनविभावाः स्युस्तद्भाषाकारविक्रियाः ।
भावुकाक्षिविकाराद्या अनुभावाः प्रकीर्तिताः ॥ २९ ॥
अश्रुवैवर्ण्यवैस्वर्यप्रमुखाः सात्त्विकाः स्मृताः ।
अत्र हर्षाश्रुपातादिभावाः संचारिणो मताः ॥ ३० ॥
उत्तमादिविभेदेन त्रिधा हास्यरसो मतः ।
स्मितं च हसितं चैतावनुभावाविहोत्तमे ॥ ३१ ॥
आद्यं विकासिगण्डं स्यादीषल्लक्ष्यरदं परम् ।
मध्यमे स्याद्विहसितं तथोपहसितं परम् ॥ ३२ ॥
मृदुस्वनं स्यात्प्रथमं शिरःकम्प्यपरं मतम् ।
अधमेऽत्रावहसितं तथातिहसितं मतम् ॥ ३३ ॥
शिरःकम्पाश्रुमत्पूर्वं विक्षिप्ताङ्गं द्वितीयकम् ।

करुणरसः—

शोक एव विभावाद्यैः पुष्टः करुणतां गतः ॥ ३४ ॥
इष्टनाशादनिष्टाप्तेः करुणो द्विविधो रसः ।
नष्टो वानिष्टयुक्तो वा बन्धुरालम्बनं यथा ॥ ३५ ॥

" कस्तवाद्य करमर्पयेत्सुतो नाथ नष्टनयनोऽसि सांप्रतम् ।
हन्त वीतकरुणो हठात्कथं यष्टिमन्धविधृतां यमोऽहरत् ॥"

" नृपतितनयभृत्यैस्तुद्यमानो नृशंसैः
पथि जनवति पश्चात्पाशबद्धस्वबाहुः ।

निशमयत निरागा नीयते हा निहन्तुं
कमलजकुलजातः कैरवः कातरात्मा ॥"

**उद्दीपनविभावाः स्युः स्वजनाक्रन्दनादयः ।**
**अनुभावास्तु निश्वासविलापरुदितादयः ॥ ३६ ॥**
**स्तम्भाश्रुपातवैस्वर्यप्रमुखाः सात्त्विकाः स्फुटाः ।**
**अत्रापस्मारदीनत्वमरणालस्यसंभ्रमाः ॥ ३७ ॥**
**विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः ।**

**रौद्ररसः—**

**क्रोध एव विभावाद्यैः पुष्टो रौद्रत्वमाप्तवान् ॥ ३८ ॥**
**मात्सर्यादपि च द्वेषाद्रौद्रोऽपि द्विविधो यथा ।**

"आजन्म ब्रह्मचारी पृथुलभुजशिलास्तम्भविभ्राजमान-
ज्याघातश्रेणिरेखान्तरितवसुमतीचक्रजैत्रप्रशस्तिः ।
वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्षुवानः पृषत्कान्
प्राप्तो राजन्यगोष्ठीवनगजमृगयाकौतुकी जामदग्न्यः ॥"

"कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
महमयमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥"

**आलम्बनविभावौ द्वौ मात्सर्यद्वेषगोचरौ ॥ ३९ ॥**
**उद्दीपनविभावाः स्युस्तद्भाषाचेष्टितादयः ।**
**अनुभावा भ्रुकुट्यक्षिरागोष्ठस्पन्दनादयः ॥ ४० ॥**
**स्वेदवैवर्ण्यवैस्वर्यप्रमुखाः सात्त्विकाः स्मृताः ।**

**ईर्ष्यामर्षोग्रतागर्वमदाद्या व्यभिचारिणः ॥ ४१ ॥**

वीररसः—

**उत्साहस्तु विभावाद्यैः पुष्टो वीररसो भवेत् ।**
**दानवीरो दयावीरो युद्धवीरस्त्रिधा यथा ॥ ४२ ॥**

"दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं [1]यत्रैव चास्तं गतम् ॥"

"सिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवैव तावत्किं भक्षणात् त्वं विरतो गरुत्मन् ॥"

"क्षुद्राः संत्रासमेनं विजहित हरयो भिन्नशक्रेभकुम्भा
युष्मद्गात्रेषु लज्जां दधति परममी सायकाः संपतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमपि न हि रुषो नन्वहं मेघनादः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥"

**आद्ये सत्पात्रमालम्बो द्वितीये दीन उच्यते ।**
**वैरी तृतीये विज्ञेयस्तत्र तूद्दीपकाः[2] क्रमात् ॥ ४३ ॥**
**दानस्तुतिर्दीनवाक्यं रणभेरीस्वनादयः ।**
**अनुभावाः क्रमादास्यप्रसादाश्रवशस्त्रसंग्रहाः ॥ ४४ ॥**
**अत्र ज्ञेया यथायोगं सात्त्विकाः पुलकादयः ।**
**संचारिणो गर्वहर्षामर्षधृत्यादयोऽपि च ॥ ४५ ॥**

[1] तत्रैव P.

[2] उद्दीपनाः P.

भयानकरसः—

**भयमेव विभावाद्यैर्भयानकरसो यथा ।**

"नीलेन ते नीररुहाक्षि गात्रं चेलेन संछादय चञ्चलाभम् ।
इतीरयन्त्यद्रिगुहासु लीनास्त्वद्वैरिणो वीक्ष्य तमोविघातम् ॥"

**आलम्बनविभावाः स्युः शत्रुव्याघ्रोरगादयः ॥ ४६ ॥**
**उद्दीपनविभावाः स्युस्तत्र तद्गर्जनादयः ।**
**अनुभावास्तु वैवर्ण्यकम्पस्वेदादयो मताः ॥ ४७ ॥**
**त एव सात्त्विका भावास्तत्राष्टौ स्पष्टलक्षणाः ।**
**संचारिणो मोहदैन्यत्रासभ्रमणादयः ॥ ४८ ॥**

बीभत्सरसः—

**जुगुप्सैव विभावाद्यैर्याता बीभत्सतां द्विधा ।**
**[1]जुगुप्स्यदर्शनादेको वैराग्यादपरो यथा ॥ ४९ ॥**

[2]वेङ्कक्षोणिभुजा पराक्रमयुजा निर्वासिता[3] वैरिणः
संविष्टाः प्रतिचत्वरं प्रतिमठं[4] ये नूत्नकापालिकाः ।
पूयार्द्रव्रणसंस्पृशो व्यपनयन्तः सत्वरं मक्षिका
भिक्षाभक्तविकीर्णशाकशकलान्येकत्र संचिन्वते ॥

"चारभटचोरचेटक[5]नटविटनिष्ठीवनशरावम् ।
कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि ॥"

**आलम्बनविभावाः स्युरहृद्या ये जुगुप्सिताः ।**

[1] जुगुप्सा P.
[2] व्यङ्क P, वेङ्गि A.
[3] निर्यासिताः A.
[4] प्रतिपदं A.
[5] विटनट P.

उद्दीपनविभावा ये पूतिगन्धादयो मताः ॥ ५० ॥
अत्रानुभावा नासास्यकूणनावेगपूर्वकाः ।
ऊह्यास्तत्र यथायोगं[1] साच्त्विकाः पुलकादयः ॥ ५१ ॥
संचारिणो यथायोगं[1] निर्वेदोद्वेजनादयः ।

अद्भुतरसः—

विस्मयस्तु विभावाद्यैः पुष्टोऽभूदद्भुतो यथा ॥ ५२ ॥

"सूतः सायकसंभवः समुदिताः सूताननेभ्यो हया
नेत्रे द्वे रथिनो रथाङ्गयुगलं युग्यान्तमृग्यो रथी ।
मौर्वीमूर्ध्नि रथः स्थितो रथवहश्चापः शरव्यं त्रयं
योद्धुः केशचरं तदेतदखिलत्राणं रणं पातु वः[2] ॥"

अलौकिकचमत्कारि वस्त्वालम्बनमिष्यते ।
उद्दीपनविभावाः स्युरहोवादादिवर्णनाः ॥ ५३ ॥
अनुभावा नेत्रवक्त्रगण्डविस्फुरणादयः ।
साच्त्विकाः स्वेदरोमाश्चप्रमुखाः परिकीर्तिताः ॥ ५४ ॥
हर्षोद्वेगादयो भावाश्चात्र संचारिणो मताः ।

शान्तरसः—

शम एव विभावाद्यैः पुष्टः शान्तरसो यथा ॥ ५५ ॥

"आशायाः प्रशमय्य वेगमखिलं निर्णीय विश्वं जडं
नीत्वा शान्तिपथं[3] शनैस्तत इतो डोलायमानं मनः ।
कृत्वा चेतसि केवलं पशुपतेरैश्वर्यमव्याहतं
कोणे कुत्रचिदास्महे वयममी कोलाहलैः किं फलम् ॥"

[1] यथायोग्यं P. [2] नः A. [3] पदं P. U.

अत्रालम्बनविभावः स्याच्छंभोस्तच्छाश्वतं पदम् ।
उद्दीपकास्तु[1] वेदान्तवेदिसंभाषणादयः ॥ ५६ ॥
अनुभावास्तु कथ्यन्ते समदर्शनतादयः ।
सात्त्विकाः स्तम्भरोमाञ्चप्रमुखाः परिकीर्तिताः ॥ ५७ ॥
संचारिणोऽपि निर्वेदमतिधृत्यादयो मताः ।

रसानां वर्णा देवताश्च—

शृङ्गार उत्पलाभः स्याद्विष्णुरस्याधिदेवता ॥ ५८ ॥
हास्यः सुधाशुभ्रवर्णो हेरम्बोऽस्याधिदेवता ।
कषायवर्णः करुणो यमस्तस्याधिदेवता ॥ ५९ ॥
रौद्रो जपारक्तवर्णो रुद्रस्तस्याधिदेवता ।
वीरो रसो गौरवर्णः शक्रस्तस्याधिदेवता ॥ ६० ॥
धूम्रो भयानकस्तस्य महाकालोऽधिदेवता ।
बीभत्सो नीलमेघाभो नन्दी तस्याधिदेवता ॥ ६१ ॥
अद्भुतः कनकच्छायो ब्रह्मा तस्याधिदेवता ।
शान्तः स्फटिकवर्णोऽस्य परं ब्रह्माधिदेवता ॥ ६२ ॥

रसाद्रसान्तरोत्पत्तिः—

हास्यः शृङ्गारसंभूतः करुणो रौद्रसंभवः ।
वीराद‌द्भुत उत्पन्नो बीभत्सोत्थो भयानकः ॥ ६३ ॥

मिथो वैरिणो रसाः—

शृङ्गारबीभत्सरसौ तथा वीरभयानकौ ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ।

[1] उद्दीपनास्तु P.

शान्तः सर्वोत्तरस्तस्य न मैत्री न विरोधिता ॥ ६४ ॥
रसभावोचितवर्णैः कर्णामृतवाक्यकल्पितैः श्लोकैः ।
लोकैरपि [1]लाल्यगुणो [2]मानिन्निरुत्तुगण्डमन्ननृप ॥ ६५ ॥

इति श्रीमदमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे[3]
रसनिर्णयो नाम तृतीयः परिच्छेदः ।

[1] विदितगुणः G. 1.

[2] मानिनीचित्तमुणमन्मनृप P.

[3] सर्वालंकारसंग्रहे A. U.

# चतुर्थः परिच्छेदः

नेतृसामान्यगुणाः—

विनयो दक्षता त्यागो माधुर्यं प्रियवादिता ।
जनानुरागो वाग्मित्वं शौचं बुद्धिः कुलीनता ॥ १ ॥
[1]धैर्यं स्मृतिस्तथोत्साहो यौवनं मान एव च ।
शौर्यं दृढत्वं तेजश्च धर्मशास्त्रार्थकारिता ॥ २ ॥
प्रज्ञा कलावेदिता च नेतृसाधारणा गुणाः ।

चतुर्विधा नायकाः—

एवंविधगुणोपेतो नायकः स चतुर्विधः ॥ ३ ॥
धीरोदात्तोऽथ ललितो धीरशान्तोद्धताविति[2] ।

धीरोदात्तः—

क्षमावानतिगम्भीरो महासत्त्वोऽविकत्थनः ॥ ४ ॥
कृपालुरनहंकारी धीरोदात्तो मतो यथा ।

"दधतो मङ्गलक्षौमे [3]वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥"

[1] स्थैर्यं P. [2] वपि P. U. [3] दधानस्य P.

धीरललितः—

सचिवायत्तसिद्धिश्च निश्चिन्तो भोगतत्परः ॥ ५ ॥
सुखी मृदुः कलासक्तः स्याद्धीरललितो यथा ।

" गौरवाद्यदपि जातु मन्त्रिणां दर्शनं प्रकृतिकाङ्क्षितं ददौ ।
तद्गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम् ॥ "

धीरशान्तः—

शुचिर्विवेकी सुभगः सुप्रसन्नः सुखी मृदुः ॥ ६ ॥
द्विजातिको[1] धीरशान्तो विलासी रसिको यथा

" भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भुवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं सा[2]
गाढोत्कण्ठा[3]लुलितलुलितैरङ्गकैस्ताम्यतीति ॥ "

धीरोद्धतः—

मायी मात्सर्यवान् दृप्तश्चण्डश्चपलमानसः ॥ ७ ॥
विकत्थनो वञ्चकोऽहंकारी धीरोद्धतो यथा ।

" रुद्राद्रेस्तुलनं[4] स्वकण्ठविपिनच्छेदो हरेर्वासनं
कारावेश्मनि पुष्पकस्य हरणं यस्येदृशः केलयः ।
सोऽहं[5] दुर्दमबाहुदण्डसचिवो लङ्केश्वरस्तस्य मे
का श्लाघा घुणजर्जरेण धनुषा कृष्टेन भग्नेन वा ॥ "

[1] द्विजाधिकः A. U.
[2] तं P.
[3] ललितललितैः P.
[4] चलनं G. 1.
[5] सोऽयं A. U.

पुनश्चतुर्विधा नायकाः—

**नायकत्वमवस्थाभिरेषां सर्वरसेष्वपि ॥ ८ ॥**

**प्रत्येकमेषां [1]शृङ्गारेऽवस्थाभिश्चतुरात्मता ।**

**दक्षिणश्च शठो धृष्टोऽनुकूलश्चेति कीर्तिताः ॥ ९ ॥**

दक्षिणः—

**एकस्यां सक्तचित्तोऽपि कान्तास्वन्यासु यः समम् ।**

**वर्तते गूढरागः [2]सन् प्रोक्तोऽसौ दक्षिणो यथा ॥ १० ॥**

"स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
 र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च ।
इत्यन्तःपुरसुन्दरीः प्रति यया विज्ञाय विज्ञापिते
 देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं[3] नाडिकाः ॥"

शठः—

**गूढविप्रियकारी तु शठ इत्युच्यते यथा ।**

"शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
 यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।
तदेतत्काचक्षे घृतमधुमयत्वद्बहुवचो-
 विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥"

धृष्टः—

**व्यक्तान्यासङ्गचिह्नः स्याद् धृष्टो वितथवाग्यथा[4] ॥ ११ ॥**

"तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
 किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।

[1] शृङ्गारावस्थासु G. 1.
[2] स उक्तः G. 1.
[3] स्थिताः A.
[4] विगतवाग्यथा U.

इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥"

अनुकूलः—

अनुकूलस्त्वेकरसोऽनन्यासङ्गमविद्यथा ।

"विभवेऽपि सति त्वया विना सुखमेतावदजस्य गण्यताम् ।
अहृतस्य विलोभनान्तरैर्मम सर्वे विषयास्त्वदाश्रयाः ॥"

षोडशविधा नायकाः—

इत्युदात्तादिनेतॄणां भेदाः षोडश कीर्तिताः ॥ १२ ॥

पुनस्त्रिविधा नायकाः—

ज्येष्ठमध्याधमत्वेन तेषामेव त्रिरूपता ।

अष्टचत्वारिंशद्विधा नायकाः—

एवं नेतृभिदास्त्वष्टचत्वारिंशत्प्रकीर्तिताः ॥ १३ ॥

नायकसहायाः—

[1]पीठमर्दो विटविदूषकौ नेतृसहायकाः ।

पीठमर्दः—

पीठमर्दः कार्यदक्षः किंचिदूनगुणस्ततः ॥ १४ ॥

विटः—

नेतृचित्तानुकूलैकविद्यो विट इतीरितः ।

विदूषकः—

विदूषकः प्रसङ्गेषु नेतृहास्यकरो मतः ॥ १५ ॥

1 पीठमर्दविटविदूषकाः P.

प्रतिनायकाः—

लुब्धो धीरोद्धतः स्तब्धः पापकृत्प्रतिनायकः ।
यौवने [1]सत्त्वसंभूताः पुंसां शोभादयो गुणाः ॥ १६ ॥
शोभा विलासो माधुर्यं गाम्भीर्यं स्थैर्यतेजसी ।

नायकविशेषगुणाः—

ललितौदार्यमित्यष्टौ तेषां लक्ष्माभिधीयते ॥ १७ ॥

शोभा—

नीचैर्गुणाधिकैः[2] स्पर्धा शोभायां शौर्यदक्षते ।

विलासः—

गतिः सधैर्या दृष्टिश्च विलासे सस्मितं वचः ॥ १८ ॥

माधुर्यम्—

श्लक्ष्णो विकारो माधुर्यं संक्षोभेऽतिमहत्यपि ।

गाम्भीर्यम्—

गाम्भीर्यं यत्प्रभावेण विकारो नोपलभ्यते ॥ १९ ॥

स्थैर्यम्—

व्यवसायादचलनं स्थैर्यं विघ्नकुलादपि[3] ।

तेजः—

अधिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि ॥ २० ॥

ललितम्—

शृङ्गाराकारचेष्टत्वं सहजं ललितं मृदु ।

[1] सति A. [2] नीचैर्गुणाधिके: P. [3] शतादपि P.

औदार्यम् —

प्रियोक्त्या जीवितादानमौदार्यं सदुपग्रहः ॥ २१ ॥

त्रिविधा नायिकाः—

स्वान्या साधारणा चेति तद्गुणा नायिकास्त्रिधा[1] ।

स्वीया—

स्वीया शीलार्जवयुता लज्जायुक्ता सती यथा ॥ २२ ॥

"शुश्रूषस्व [2]गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
[3]भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने [4]भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥"

अन्या—

अन्यान्योढा कन्यका च नान्योढाङ्गिरसे क्वचित् ।
कन्यानूढा स्वेच्छयास्यां रागोऽङ्गाङ्गिरसे यथा ॥ २३ ॥

"एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥"

साधारणा—

साधारणा स्याद्गणिका कलाप्रागल्भ्यधौर्त्ययुक्[5] ।
रक्तेव रञ्जयेदाढ्यान् निःस्वान्निर्वासयेद्यथा ॥ २४ ॥

"यदा येन समायुक्ता तदा तद्रागरूषिता ।
वियुक्ता स्वरुचिं धत्ते वेश्या किं स्फाटिकी शिला ॥"

[1] नायिका त्रिधा U. [2] गुरु A. [3] भर्त्रा U. [4] भोगेषु A. [5] धैर्ययुक् P

स्वाभाविकमिदं तासां लक्षणं रूपकेषु तु ।
रक्तेव तत्प्रहसने नैषा दिव्यनृपाश्रये ॥ २५ ॥

त्रिविधा स्वीया—

स्वीया तु मुग्धा मध्या च प्रगल्भेति त्रिधा मता ।

स्वीयमुग्धा—

मुग्धा नववयःकामा रतौ वामाल्पकृद्यथा ॥ २६ ॥

"अङ्कूरत्कुचमङ्गमायतदृशः स्वान्तं विशन्मन्मथं
रोहद्रोमलतं [1]वलग्नमलिकं व्यालोलनीलालकम् ।
अङ्गीकारपराङ्मुखं रतमनायासापनोद्यक्रमः
कोपो यस्य विलासिनः सुकृतिनामेकः स एवाग्रणीः ॥"

स्वीयमध्या—

मध्योदितवयःकामा मोहान्तसुरता यथा ।

"धन्यासि या कथयसि प्रियसंगमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति [2]प्रणिहिते तु करे प्रियेण
सख्यः शपामि [3]न हि किंचिदपि स्मरामि ॥"

स्वीयप्रगल्भा—

अत्यारूढवयःकामा प्रगल्भा प्रियवक्षसि ॥ २७ ॥
विलीयमानेव रतारम्भेऽप्यस्ववशा यथा ।

"गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलत्काञ्चीनितम्बाम्बरा ।

[1] विलग्नं P.  [2] प्रणिहितश्च करः P, प्रणिहिते च U.  [3] यदि U.

मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥"

त्रिविधा मध्या—

**मध्या स्यात् त्रिविधा धीरा धीराधीरेतरेति च ॥ २८ ॥**

मध्यधीरा—

**धीरा सोत्प्रासवक्रोक्त्या सागसं खेदयेद्यथा[1] ।**

"स्विन्नमातपभरेण ते मुखं वायुना विलुलिताः शिरोरुहाः ।
क्लान्तमङ्गमपि मार्गसंभ्रमात्तावदास्स्व सुभगात्र मा विश ॥"

मध्यधीराधीरा—

**साश्रुसोत्प्रासवक्रोक्त्या धीराधीरा भवेद्यथा ॥ २९ ॥**

"बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
[2]खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥"

मध्याधीरा—

**साश्रुनिष्ठुरभाषाभिरधीरा सागसं यथा ।**

"यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि मादरं कृथाः ।
खण्डिताधरकलङ्कितं खलं शक्नुमो न नयनैर्निरीक्षितुम् ॥"

त्रिविधा प्रगल्भा—

**प्रगल्भापि त्रिधा धीराधीरेतरेति च ॥ ३० ॥**

[1] खेलयेद्यथा A. [2] दोषो P.

प्रगल्भधीरा—

**सावहित्थादरोदास्ते सुरते विहितागसम् ।**
**प्रगल्भधीरा दयितं खेदयेत्कुपिता यथा ॥ ३१ ॥**

"एकत्रासनसंगतिः[1] परिहृता प्रत्युद्गमाद् दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्याहारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥"

"आयस्ता कलहं पुरेव कुरुते न स्रंसने वाससो
भुग्नभ्रूगति खण्ड्यमानमधरं धत्ते न केशग्रहे ।
[2]अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने
तन्व्या शिक्षित एष संप्रति [3]कुतः कोपप्रकारोऽपरः ॥"

प्रगल्भधीराधीरा—

**प्रगल्भधीराधीरा तु वक्रसोत्प्रासवाग्यथा ।**

"कोपो यत्र भ्रुकुटिरचना विग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः[4] ॥"

प्रगल्भाधीरा—

**अपि प्रगल्भाधीरा संतर्ज्य संताडयेद्यथा ॥ ३२ ॥**

[1] संस्थितिः P. [2] अङ्गं नार्पयति P.
[3] पुनः A. U. [4] प्रियायाः A.

"कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा [1]मोहनमन्दिरं दयितया सायं सखीनां पुरः ।
भूयो नैवमिति स्खलन्मृदुगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥"

षड्विधा मध्या—

ज्येष्ठाकनिष्ठाभेदेन पुनर्मध्या तु षड्विधा ।

षड्विधा प्रगल्भा—

प्रगल्भापि पुनस्ताभ्यां भेदाभ्यां षड्विधा यथा ॥ ३३ ॥

"दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलात्[2] ।
ईषद्वक्रितकंधरः सपुलकप्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥"

अष्टौ नायिकावस्थाः—

आसामष्टाववस्थाः स्युः स्वाधीनपतिकादिकाः[3] ।
स्वाधीनपतिकाद्या च[4] तथा वासकसज्जिका ॥ ३४ ॥
कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
विरहोत्कण्ठिता चैव खण्डिता चाभिसारिका ॥ ३५ ॥

स्वाधीनपतिका—

आसन्नायत्तरमणा स्वाधीनपतिका यथा ।

"मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।

[1] वासनिकेतनं P.
[2] छलः A.
[3] दयः A. U.
[4] चाद्या A.

अन्यापि किं [1]सखि न भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः ॥"

वासकसज्जिका—

**एष्यत्प्रिया मुदा वासकसज्जालंकृता यथा ॥ ३६ ॥**

"विमुक्तमालिन्यविशेषकान्तिरामुक्ततारामलचारुहारा[2] ।
स्फीताम्बरा प्रीतिमुपैति काचिदुदेष्यतीन्दौ सति यामिनीव ॥"

कलहान्तरिता—

**विधूय दयितं चार्ता कलहान्तरिता यथा ।**

"अनुकूलजनोऽनुनेतुकामः [3]परुषे पादनतो गतोऽवधूतः[4] ।
शिशिरं सलिलं शिखाभिरग्नेर्निहतं किं न गुणं निजं जहाति ॥"

विप्रलब्धा—

**विमानिता विप्रलब्धा नायाते समयं यथा ॥ ३७ ॥**

"उत्तिष्ठ दूति यामो यामो यातस्तथापि नायातः ।
[5]मिथ्याप्रलापशीले विश्वासः कुत्र धूर्तेऽस्मिन् ॥"

प्रोषितभर्तृका—

**देशान्तरगते प्रोषितप्रिया दयिते यथा ।**

"उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।

[1] न सखि P. [2] तारहारा U. [3] परुषैः U. [4] विधूत A.
[5] The Das'arūpaka reads the second half thus :
यातः परमपि जीवेज्जीवितनाथो भवेत्तस्याः । (Pa. 2.)

तन्वीमार्द्रां नयनसलिलैः सारयित्वा कथंचि-
द्भूयो भूयः स्वयमधिकृतां मूर्च्छनां विस्मरन्ती ॥"

विरहोत्कण्ठिता—

**चिरयत्यव्यलीके तु विरहोत्कण्ठिता यथा ॥ ३८ ॥**

"सखि स विजितो वीणावाद्यैः कयाप्यमरस्त्रिया[1]
पणितमभवत्ताभ्यां तत्र क्षपा ललिता[2] ध्रुवम् ।
कथमितरथा शेफालीषु स्फुरत्कुसुमास्वपि
प्रसरति नभोमध्येऽपीन्दौ प्रियेण विलम्ब्यते ॥"

खण्डिता—

**खण्डितेर्ष्यावती ज्ञातस्मरचिह्ने प्रिये यथा ।**

"नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम् ॥"

अभिसारिका—

**सरेद्वा सारयेद्वाभिसारिका कामुकं यथा ॥ ३९ ॥**

"[3]प्रशिथिलनिजलज्जाः प्राङ्मुखं वीक्षमाणा-
स्तिमिरविरतिभीतास्तूर्णमुत्तीर्णमार्गाः ।
[4]वलयचलनलोला वञ्चितात्मीयलोकाः
सततमभिसरेयुः सागसोऽप्यात्मनाथान् ॥"

[1] अपरस्त्रिया U. [2] ललितं U. [3] प्रचलित P. [4] वलयवलन U.

नायिकादूत्यः—

आसां दूत्यः सखी दासी धात्रेयी [1]प्रतिवेशिनी ।
लिङ्गिनी शिल्पिनी कारुः स्वयं वा तदसंभवे ॥ ४० ॥

“ [2]मातः कं हृदये निधाय सुचिरं रोमाञ्चिताङ्गी मुहु-
र्जृम्भामन्थरतारकां विलुलितापाङ्गां दधाना दृशम् ।
सुप्तेवालिखितेव शून्यहृदया रेखावशेषीभव-
स्यात्मद्रोहिणि किं ह्रिया कथय मे गूढो निहन्ति स्मरः ॥ ”

नायिकालंकाराः—

यौवने सत्त्वजाः स्त्रीणामलंकारास्तु विंशतिः ।
भावो हावश्च हेला च त्रयोऽप्यङ्गसमुद्भवाः ॥ ४१ ॥
शोभा कान्तिस्तथा दीप्तिर्माधुर्यं च प्रगल्भता ।
औदार्यं धैर्यमित्येते सप्तायत्नसमुद्भवाः[3] ॥ ४२ ॥
लीला विलासो विच्छित्तिर्विभ्रमः किलिकिञ्चितम् ।
मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा ॥ ४३ ॥
विहृतं च विविच्यन्ते तत्र स्वाभाविका दश ।

सत्त्वम्—

निर्विकारो मनोवृत्तिविशेषः सत्त्वमुच्यते ॥ ४४ ॥

भावः—

तस्याद्यविक्रिया भावो भाव्यऽलंकारकृद्यथा ।
भावो मानसशृङ्गारः,

[1] प्रातिवेशिनी A. [2] U. Omits this stanza. [3] सप्तालंकृतयो मताः P.

"दृष्टिं सा ललितां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रे प्रेरयति प्रवर्तितसखीसंभोगवार्तास्वपि ।
पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग्यथा
बाला यौवनशैशवव्यतिकरावष्टभ्यमाना शनैः ॥"

हावः—

**हावोऽक्षिभ्रूविकृद्यथा ॥ ४५ ॥**

"अव्याजमुग्धमधुरैररविन्दकोण-
निर्यन्मधुव्रतनिकायनिभैः कटाक्षैः ।
भावावतारपिशुनैरपि भो वयस्य
बाला भवन्तमकरोदपदेशलक्ष्यम् ॥"

हेला—

**स एव हेला सुव्यक्तः शृङ्गारद्योतको यथा ।**

"मकरन्दपानमत्तां मधुकरमालामिवारुणश्यामाम् ।
अलसविलुतापाङ्गां[1] दृष्टिं प्रेषयति दूतिकामिव ते ॥"

शोभा—

**रूपोपभोगतारुण्यैः शोभाङ्गालंकृतिर्यथा ॥ ४६ ॥**

"तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने संनिहितेऽपि नार्यः ॥"

कान्तिः—

**शोभैव रागनिबिडा कान्तिरित्युच्यते यथा ।**

[1] अलसवलितामपाङ्गैः A. U.

"उन्मीलद्वदनेन्दुदीप्तिविसरैर्दूरे[1] समुत्सारितं
भग्नं पीनकुचस्थलस्य च रुचा हस्तप्रभागर्हितम्[2] ।
एतस्याः कलविङ्ककण्ठकदलीकल्पं मिलत्कौतुका-
[3]दप्राप्ताङ्गसुखं रुषेव सहसा केशेषु लग्नं तमः ॥"

दीप्तिः—

**कान्तेरेव हि विस्तारो दीप्तिरित्युच्यते यथा ॥ ४७ ॥**

"[4]वनतरुवरवीथीवर्त्मगाढं पुरस्ता-
त्ततनिजतनुकान्त्या तर्जयन्ती तमिस्रम् ।
दिनविरमजिगीषोर्दीपिकेवासमेषो-
श्चरति चकितपादन्याससंभावितोर्वी ॥"

माधुर्यम्—

**अश्लाघ्यवस्तुनो योगे माधुर्यं रम्यता यथा ।**

"सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि[5] मधुराणां मण्डनं नाकृतीनाम् ॥"

प्रागल्भ्यम्—

**व्रीडोत्थसाध्वसत्यागः प्रागल्भ्यं गीयते यथा ॥ ४८ ॥**

"तथा व्रीडाविधेयापि तथा मुग्धापि सुन्दरी ।
[6]कलाप्रागल्भ्यचातुर्यसभास्वाचार्यकं गता ॥"

[1] विसरैस्तूर्णं U.
[2] प्रभाभिर्हतम् U.
[3] अप्राप्ताभिमुखं P.
[4] वनतरुतरवाटीवर्ति P.
[5] किमिह च P.
[6] कलाप्रयोग P. कलाप्रावल्भ्यचातुर्यं U.

औदार्यम् —

**औदार्यं च प्रियोत्कर्षो बह्वायासेऽपि तद्यथा ।**

"अलसारुणलोचनारविन्दां परिभोगोचितधूसरैकचेलाम् ।
शिथिलाकुलवेणिबन्धरम्यामबलामन्तिकशायिनीं दिदृक्षे[1] ॥

धैर्यम् —

**अचापलहृतं चित्तवृत्तं धैर्यं मतं यथा ॥ ४९ ॥**

"ज्वलतु गगने रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यति ।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥"

लीला—

**प्रियानुकरणं लीला मधुरैश्चेष्टितैर्यथा ।**

"आसितानि हसितानि कृतानि प्रेक्षितानि गदितानि गतानि ।
प्रायशोऽनुकुरुते ललिताङ्गी नर्तकीव चतुरं दयितस्य ॥"

विलासः—

**प्रिये दृष्टे विलासोऽङ्गक्रियाद्यतिशयो यथा ॥ ५० ॥**

"अत्रान्तरे किमपि वाग्विभवातिवृत्ति-
वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः ।
तद्भूरिसात्त्विकविकारमपास्तधैर्य-
माचार्यकं विजयि मान्मथमाविरासीत् ॥"

[1] ददर्श P.

विच्छित्तिः—

**स्वल्पाप्यलंक्रिया काले[1] विच्छित्तिस्तोषकृद्यथा ।**

"कर्णार्पितो लोध्रकषायरूक्षे गोरोचनाभङ्गनितान्तगौरे ।
तस्याः कपोले परभागलाभाद्बबन्ध चक्षूंषि यवप्ररोहः ॥"

विभ्रमः—

**विभ्रमस्त्वरया काले[2] भूषणव्यत्ययो यथा ॥ ५१ ॥**

"श्रुत्वायातं बहिः कान्तमसमाप्तविभूषया ।
फालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकं कृतम् ॥"

किलिकिञ्चितम्—

**किलिकिञ्चितमश्रुकृद्धर्षादेः संकरो यथा ।**

"रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्धमधुरे ।
कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदितं
क्रुधोद्भ्रान्तं कान्तं पुनरपि विदध्यान्मयि मुखम् ॥"

मोट्टायितम्—

**चित्रादावपि तत्त्वेन बुद्धिर्मोट्टायितं यथा ॥ ५२ ॥**

"चित्रवर्तिन्यपि नृपे तत्त्वावेशेन चेतसा ।
व्रीडार्धवलितं चक्रे मुखेन्दुमवशैव[3] सा ॥"

**मोट्टायितं प्रियं स्मृत्वा स्वाङ्गभङ्गादि वा यथा ।**

[1] कार्ये P. कारे U.  [2] कान्ते P.  [3] अवशेव A.

"स्मरदवथुनिमित्तं गूढमुन्नेतुमस्याः
सुभग तव कथायां प्रस्तुतायां सखीभिः ।
[1]वदति विनतपृष्ठोदस्तपीनस्तनाग्रा
ततवलयितबाहूज्जृम्भितैः स्वाङ्गभङ्गैः ॥"

कुट्टमितम्—

दृष्टान्तः परिरम्भादौ[2] कुप्येत्कुट्टमितं यथा ॥ ५३ ॥

"परिरम्भपरं निजं निरुन्धे करयोः केवलमेव कर्म कान्तम् ।
पुलकैः पुनरुच्यते भवत्याः पुर एव स्फुटमायताक्षि भावः ॥"

बिब्बोकः—

गर्वाभिमानावेशेन बिब्बोकोऽनादरो यथा ।

"सव्याजं तिलकालकानविरलं लोलाङ्गुलीभिः स्पृशन्
वारं वारमुदञ्चयन् कुचयुगप्रोतं च चीराञ्चलम्[3] ।
यद्भ्रूभङ्गतरङ्गिताञ्चितदृशा सावज्ञमालोकित-
स्तद्गर्वादवधीरितोऽस्मि न पुनः कान्तः कृतार्थीकृतः ॥"

ललितम्—

सुकुमाराङ्गविन्यासो मसृणो ललितं यथा ॥ ५४ ॥

"सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती
सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन ।
विन्यस्यन्ती चरणकमले लीलया स्वैरयातै-
र्निःसंगीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥"

[1] हरति P. [2] परिरम्भाद्यैः U. [3] चीनाञ्चलम् P. U.

विहृतम्—

**वक्तव्यमपि यन्नोक्तं व्रीडया विहृतं यथा ।**

"पादाङ्गुष्ठेन भूमिं किसलयमृदुना सापदेशं लिखन्ती
भूयो भूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे ।
वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना
यन्मां नोवाच किंचित्स्थितमपि हृदये मानसं तद् दुनोति ॥"

**इत्युदाहृतयो नेतृगुणेषूह्या यथोचितम् ॥ ५५ ॥**
**नेतारो बहवः सन्तु[1] धीरोदात्तो जगत्त्रये ।**
**[2]तोण्डनिर्यङ्ककारस्त्वमेको [3]मन्नमहीपते ॥ ५६ ॥**

**इति श्रीमदमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे**
**नेतृभेदनिर्णयो नाम चतुर्थः परिच्छेदः**

---

[1] सन्ति P. [2] तोण्डनिर्याङ्ककारी A. [3] मन्म P.

# पञ्चमः परिच्छेदः

रीतिः—

रीतिरात्मात्र काव्यस्य कथ्यते सा चतुर्विधा ।

चतुर्विधा रीतयः—

वैदर्भी च तथा गौडी पाञ्चाली लाटिकेति च ॥ १ ॥

गुणाः—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥ २ ॥

श्लेषः—

अल्पप्राणाक्षरैः[1] श्लेषः पदैरशिथिलैर्मतः ।

प्रसादः—

पदैः प्रसन्नैर्यत्रार्थः प्रसादोऽसौ प्रतीयते ॥ ३ ॥

समता—

प्रक्रान्तबन्धो यत्र स्यात्समः सा समता मता ।

माधुर्यम्—

बन्धा मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः ॥ ४ ॥
सरसौ यत्र शब्दार्थौ माधुर्यं श्रुतिमोदकृत् ।

[1] अक्षरः A.

सुकुमारता—

अनिष्ठुरैः श्रुतिसुखैर्वर्णैः स्यात्सुकुमारता ॥ ५ ॥

अर्थव्यक्तिः—

अर्थव्यक्तिरनेयोऽर्थः साक्षाद्यत्राभिधीयते ।

उदारता—

शब्दार्थयोर्गुणोत्कर्षो यत्र सा स्यादुदारता ॥ ६ ॥

ओजः—

वाक्ये समासबाहुल्यं हृद्यमोजोऽभिधीयते ।

कान्तिः—

कमनीयो लौकिकोऽपि यत्रार्थः कान्तिरुच्यते ॥ ७ ॥

समाधिः—

समाधिरन्यधर्माणामध्यासादर्थगौरवम् ।

वैदर्भी—

[1]एतैः समग्रा वैदर्भी वर्ण्यते दशभिर्गुणैः ॥ ८ ॥
असमस्ता द्वित्रपदसमस्ता वा मनोहरा ।
[2]वर्गद्वितीयप्रचुरा स्वल्पघोषाक्षरा यथा ॥ ९ ॥

"वैदेहि पश्यामलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम् ।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम्[3] ॥"

[1] एतैस्तु मिश्रा P.

[2] वर्ग्य A.

[3] तारतारम् P.

गौडी—

**समस्तात्युद्भटपदामोजःकान्तिसमन्विताम् ।**
**महाप्राणाक्षरवतीं गौडीमाहुर्बुधा यथा ॥ १० ॥**

" अश्रान्तश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवा-
जिह्मब्रह्ममुखौघविघ्नितनवस्वर्गक्रियाकेलिना ।
पूर्वं गाधिसुतेन सामि घटिता मुक्ता नु मन्दाकिनी
यत्प्रासादद्दुकूलवल्लिरनिलान्दोलैरखेलद्दिवि ॥ "

पाञ्चाली—

**माधुर्यसौकुमार्यौजःकान्तिभिः सहिता गुणैः ।**
**समस्तपञ्चषपदा पाञ्चाली कीर्त्यते यथा ॥ ११ ॥**

" वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भै-
र्ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधृतावाङ्मुखत्वैः ।
कस्या नोत्तानगाया दिवि सुरसुरभेरास्यदेशं गताग्रै-
र्यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म ॥ "

लाटी—

**समस्तरीतिसंमिश्रा लाटी मृदुसमासिनी ।**
**संयुक्तवर्णभूयिष्ठा स्वल्पघोषाक्षरा यथा ॥ १२ ॥**

" एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत्पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥ "

रसानां गुणविशेषाः—

शृङ्गारहास्यकरुणशान्ता माधुर्यशालिनः ।
वीररौद्राद्भुतभयबीभत्सेष्वोज उच्यते ॥ १३ ॥
रसेष्वेतेषु सर्वेषु प्रसादः परिकीर्तितः ।
अन्ये गुणा यथायोगं योजनीयाः पृथक्पृथक्[1] ॥ १४ ॥

अर्थालंकाराः—

अथार्थानामलंकाराः कथ्यन्ते सांप्रतं क्रमात् ।
स्वभावाख्यानमुपमा रूपकं दीपकावृती ॥ १५ ॥
आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना ।
समासातिशयोत्प्रेक्षे हेतुः सूक्ष्मो लवः क्रमः ॥ १६ ॥
प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम् ।
उदात्तापह्नुतिश्लिष्टविशेषास्तुल्ययोगिता ॥ १७ ॥
विरोधाप्रस्तुतस्तोत्रे व्याजस्तुतिनिदर्शने ।
सहोक्तिः परिवृत्त्याशीर्वक्रोक्तिरथ संकरः ॥ १८ ॥

स्वभावोक्तिः—

यद्यद्वस्तु यथावस्थं तथा तद्रूपवर्णनम् ।
स्वभावोक्तिरिति ख्याता सैव जातिर्मता यथा ॥ १९ ॥

"अङ्कोपान्तमुपाश्रितो गजमुखो मातुर्भुजालम्बितः
स्तन्यास्वादसुखातिरेकतरलस्तद्वक्त्रदत्तेक्षणः ।
हस्ताग्रेण पयोधरान्तरमुखं गृह्णन्मुहुर्लीलया
पादाब्जं मणिकिंकिणीपरिगतं प्रेङ्खोलयन्पातु नः[2] ॥"

[1] क्वचित्क्वचित् A. U.

[2] वः P. U.

चतुर्विधा स्वभावोक्तिः—

**जातिक्रियागुणद्रव्यभेदैः[1] सापि चतुर्विधा ।**

उपमा—

**यस्य येनास्ति सादृश्यं यस्मात्कस्मात्प्रकारतः ॥ २० ॥**
**उपमा नाम तस्योक्तिरिववद्वादिभिर्यथा ।**

"उन्मुक्तकञ्चुकतयेयमुदारकान्तिः शस्त्रीव शम्बररिपोरपनीतकोशा ।
रक्तावगुण्ठनपटीरचितापिधाना संध्याम्बुवाहकलितेव शशाङ्करेखा ॥"

**बहवस्तत्प्रकाराः स्युस्तेषामन्यत्र विस्तरः ॥ २१ ॥**

रूपकम्—

**एकत्र रूपणं यत्स्यादुपमानोपमेययोः ।**
**रूपकं नाम तच्चापि बहुभेदयुतं यथा ॥ २२ ॥**

"मन्दस्मितं मधुरमम्बु मुखं सरोजं
मन्दारदाम महितं ननु बाहुयुग्मम् ।
पुण्याहपूर्णकलशौ पृथुलौ स्तनौ ते
नीराजना निजकटाक्षनिरीक्षणानि ॥"

दीपकम्—

**सुबन्तं वा तिङन्तं वा पदमेकत्र संगतम् ।**
**सर्वोपकारकं स्याच्चेत्तदाहुर्दीपकं यथा ॥ २३ ॥**

सुबन्तदीपकम्—

"अक्षं विक्षिपति ध्वजं विभजते मृद्नाति नद्धं युगं
चक्रे चूर्णयति क्षिणोति तुरगान् रक्षःपतेः पक्षिराट् ।

[1] भेदात् A. U.

रुन्धे गर्जति तर्जयत्यभिभवत्यालम्बते ताडय-
त्याकर्षत्यपकर्षति प्रचलति न्यञ्चत्युदञ्चत्यपि ॥"

तिङन्तदीपकम्—

"संचारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥"

आवृत्तिः—

**उक्तस्यानेकधोक्तिः स्यादावृत्तिः सा मता[1] यथा ।**

"विश्वं जित्वा भवानद्य विहरत्यवरोधनैः ।
विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥"

आक्षेपः—

**आक्षेपः प्रतिषेधोक्तिः कालधर्मादिकात्मनाम्[2] ॥ २४ ॥**
**आक्षेप्यानामनन्तत्वादाक्षेपोऽपि तथा यथा ।**

"कस्तूरीतिलकं बाले फाले मा कुरु मा कुरु ।
अद्य साम्यं भजामीति जृम्भते शशलाञ्छनः ॥"

अर्थान्तरन्यासः—

**प्रस्तुतार्थस्य सिद्ध्यर्थं विन्यासोऽर्थान्तरस्य यः ॥ २५ ॥**
**असावर्थान्तरन्यासो भिद्यते बहुधा यथा ।**

"आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन ।
सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्वमसह्यम् ॥"

1 आवृत्तिः संमता U.
2 कालधर्मदिगात्मनाम् A.

व्यतिरेकः—

**शाब्दे प्रातीतिके वापि [1]सादृश्ये सति वस्तुनोः ॥ २६ ॥**
**तयोर्यद्भेदकथनं व्यतिरेको मतो यथा ।**

"अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि ।
असावञ्जनसंकाशस्त्वं तु चामीकरद्युतिः[2] ॥"

"हीना दानगुणेन हेमवलयैस्त्यक्ता गता विभ्रमै-
[3]र्भीता त्वत्परिभूतिसंशयवती मध्येजलं संश्रिता ।
किंचैतत्कुचकुम्भयुग्मविगल[4]त्क्षौमापिधानोज्झिता
बाले बालमृणालिका कथमियं त्वद्बाहुवल्लीसमा ॥"

विभावना—

**स्वकारणनिराकृत्या कारणान्तरकल्पनम् ॥ २७ ॥**
**विभावना स्वभावो वा विभाव्यो यत्र सा यथा ।**

"असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥"

"अनञ्जितासिता दृष्टिर्भ्रूरनावर्जिता नता ।
अरञ्जितारुणच्छायमधरं तव सुन्दरि ॥"

समासोक्तिः—

**वस्तु किंचिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः ॥ २८ ॥**
**उक्तिः समासरूपत्वात्सा समासोक्तिरिष्यते ।**
**अन्यापदेश इत्यस्या नामान्यच्चोच्यते यथा ॥ २९ ॥**

[1] सादृश्यं यत्र A. 1. [2] प्रभः A. G. 1.
[3] भूयः G. 1. [4] विलसत् P.

" मुग्धे यदाकलयसे मृगतृष्णिकाम्भ-
स्तद्विद्धि तामरसनेत्रि तटाकवारि ।
अस्मिन् यथेष्टमवगाह्य सुखं विहृत्य
[1]चिन्तामपाकुरु चिराय विमुञ्च तापम् ॥"

अतिशयोक्तिः—

**विवक्षितार्थविषये लोकवृत्तातिशायिनी ।**
**उक्तिस्त्वतिशयोक्तिः स्यादनुद्वेगकरी यथा ॥ ३० ॥**

" यदगारघटाट्टकुट्टिमस्रवदिन्दूपलतुन्दिलापगा ।
मुमुचे न पतिव्रतौचिती प्रतिचन्द्रोदयमभ्रगङ्गया ॥"

उत्प्रेक्षा—

**यथार्थस्यान्यथा क्लृप्तिरुत्प्रेक्षा साभिधीयते ।**
**मन्येशङ्केध्रुवंप्रायोनूनमित्यादिभिर्यथा ॥ ३१ ॥**

" यदेतस्मिन्निन्दौ जलदलवलीलां प्रकुरुते
तदाचष्टे लोकः शश इति न मां तु प्रति तथा ।
अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥"

उत्प्रेक्षाव्यञ्जकः—

**इवशब्दः क्रियायोगे तूत्प्रेक्षाव्यञ्जको यथा ।**

" अयोध्यापुरनारीणां मुखसौन्दर्यलिप्सया ।
सरोजानि सरोमध्ये चरन्तीव चिरं तपः ॥"

[1] चिन्तां पराकुरु विमुञ्च चिराय U.

हेतुः—

**कारकं [1]व्यञ्जकं वापि हेतुर्यत्र विशेषणम् ॥ ३२ ॥**
**निर्वर्त्ये वा विकार्ये वा प्राप्ये वा कारकं यथा ।**

"अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः ।
उत्पादयति लोकस्य प्रीतिं दक्षिणमारुतः ॥"

"एष ते विद्रुमच्छायो मरुमार्ग इवाधरः ।
करोति कस्य नो मुग्धे पिपासाव्याकुलं मनः ॥"

"मानयोग्यां करोमीति प्रियस्थाने कृतां सखीम् ।
बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरम् ॥"

"अवध्यैरिन्दुपादानामसाध्यैश्चन्दनाम्भसाम् ।
देहोष्मभिः सुबोधं ते सखि कामातुरं मनः ॥"

**भावाभावादिभेदेन हेतुभेदास्त्वनेकशः ॥ ३३ ॥**

सूक्ष्मः—

**इङ्गिताकारलक्ष्यार्थसौक्ष्म्यात्सूक्ष्मो मतो यथा ।**

"पथि पथिकवधूभिः सादरं पृच्छ्यमाना
कुवलयदलनीलः कोऽयमार्ये तवेति ।
स्मितविकसितगण्डं व्रीडविभ्रान्तनेत्रं
मुखमवनमयन्ती स्पष्टमाचष्ट सीता ॥"

लवः—

**वचसा चेष्टयार्थस्य गोपनं वा प्रकाशनम् ॥ ३४ ॥**
**लेशमेके विदुर्निन्दां स्तुतिं वा लेशतो यथा ।**

[1] ज्ञापकं A.

"निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥"

"दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥"

क्रमः—

**उद्दिष्टानां पदार्थानां क्रमेणैवानुदेशिभिः ॥ ३५ ॥**
**सह संयोगकथनं क्रम इत्युच्यते यथा ।**

"हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु
स्तनतपनवनाम्भोहर्म्यगोक्षीरपानैः ।
सुखमनुभव राजन् त्वद्विषो यान्तु नाशं
दिवसकमलज्जाशर्वरीरेणुपङ्कैः ॥"

प्रेयः—

**प्रेयः प्रियतरालापः प्रेमादिख्यापकं यथा ॥ ३६ ॥**

"[1]अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥"

[1] The Poona MS. omits this stanza and gives the stanza मलयपवनमन्द etc. as the example.

रसवत्—

[1]रसानामेव सर्वेषामुत्कर्षो रसवद्यथा ।

“ मलयपवनमन्दस्पन्दमानारविन्द-
प्रसरदलिविलासप्रौढिपाटच्चराणाम् ।
अधिगतिरहमेवालीकरोषस्पृशां स्या-
मलसवलदपाङ्गालोकितानाममुष्याः ॥ ”

रसानामिह चान्येषामुत्कर्षस्तूह्यतां बुधैः ॥ ३७ ॥
अत्यहंकारवद्वाक्यमूर्जस्वीत्युच्यते यथा ।

ऊर्जस्वि—

“ क्षुद्राः संत्रासमेनं विजहित हरयो भिन्नशक्रेभकुम्भा
युष्मद्गात्रेषु लज्जां दधति परममी सायकाः संपतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमपि न हि रुषो नन्वहं मेघनादः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥ ”

पर्यायोक्तम्—

इष्टमर्थमनाख्याय साक्षात्तस्यैव सिद्धये ॥ ३८ ॥
यत्प्रकारान्तराख्यानं पर्यायोक्तं मतं यथा ।

“ त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
शोभामित्यभिधायिनि प्रियतमे [2]तद्वेणिकासंस्पृशि ।

[1] Poona MS. reads रसौघभूतो रसवद्यथा and gives the stanza
“ अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ”
as the example instead of मलयपवन etc.

[2] तद्वीटिका. P.

शय्योपान्तनिविष्टसस्मितवधूनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपान्यासमालीजनः ॥"

समाहितम् —

**किंचिदारभमाणस्य कार्यं दैववशात्पुनः ॥ ३९ ॥**
**तत्साधनसमापत्तिः समाहितमिदं यथा ।**

"मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥"

उदात्तम् —

**तदुदात्तं यन्महत्त्वमाशयैश्वर्ययोर्यथा ॥ ४० ॥**

"गुरोः शासनमत्येतुं न शशाक स राघवः ।
यो रावणशिरश्छेदकार्यभारेऽप्यविक्लवः ॥"

"रत्नस्तम्भेषु संक्रान्तप्रतिबिम्बशतैर्वृतः ।
ज्ञातो लङ्केश्वरः कृच्छादाञ्जनेयेन तत्त्वतः ॥"

अपह्नुतिः—

**सत्यार्थापह्नवादन्यप्रकारोऽपह्नुतिर्यथा ।**

"नेयं निशा दिवस एव भवेत्कथं मे
निद्रान्यथा नयनयोर्युगलं न याति ।
नायं शशी तपन एव तनोति ताप-
मुत्पात एव यदि मास्तु विभान्ति ताराः ॥"

[1] सखी. P. U.

श्लिष्टम्—

**एकरूपमनेकार्थं श्लिष्टं बहुविधं यथा ॥ ४१ ॥**

"प्रौढपयोधरभारा प्रावृण्मलिनाम्बरा प्रबाष्पधरा ।
मानसगतराजहंसा मानवतीवाद्य भाति मदनार्ता ॥"

विशेषोक्तिः—

**गुणजातिक्रियादीनां यत्र वैकल्यदर्शनम् ।**
**विशेषदर्शनायैव विशेषोक्तिर्मता यथा ॥ ४२ ॥**

"धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशां
दृशां कोणो बाणः सुहृदपि जडात्मा हिमकरः ।
तथाप्येकोऽनङ्गस्त्रिभुवनमपि व्याकुलयति
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥"

तुल्ययोगिता—

**यत्प्रसिद्धगुणैः साम्यकथनं यस्य कस्यचित् ।**
**स्तुत्या वा निन्दया तुल्ययोगिता सा मता यथा ॥ ४३ ॥**

"यमः कुबेरो वरुणः सहस्राक्षो भवानपि ।
बिभ्रत्यनन्यविषयां लोकपाला इति श्रुतिम्[1] ॥"
"संगतानि मृगाक्षीणां तटिद्विलसितानि च ।
क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥"

विरोधः—

**उक्तैः पदार्थैर्यैः कश्चिद्विरुद्धोऽर्थः प्रसाध्यते ।**
**विरोध इति विज्ञेयः सोऽपि नानाविधो यथा ॥ ४४ ॥**

[1] स्मृतिम् U.

"मृणालबाहु रम्भोरु पद्मोत्पलदलेक्षणम् ।
अपि ते रूपमस्माकं तन्वि तापाय कल्पते ॥"

अप्रस्तुतस्तुतिः—

**अप्रस्तुतस्तुतिः सा स्यादप्रक्रान्तेऽपि या स्तुतिः ।**
**सेवादिक्लेशनिर्विण्णमानसेन कृता यथा ॥ ४५ ॥**

"मन्दिरमरविन्दकुटी बिसमशनं शयनमम्बुजदलानि ।
कल्लोला हिन्दोला मरालयूनोस्तपांसि भूयांसि ॥"

व्याजस्तुतिः—

**यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ यथा ।**

कीर्तिस्ते दयिता तदीयजठरे लोकत्रयं वर्तते
तस्मात्त्वं जगतां पिता पितृधनं तेनार्थिनां त्वद्धनम् ।
[1]त्यागं ते जगदेकमल्लनृपते त्यागं न मन्यामहे
कस्त्यागः स्वकुटुम्बपोषणविधावर्थव्ययं कुर्वतः ॥

निदर्शना—

**अर्थान्तरमुपन्यस्य किंचित्तत्सदृशं यदा[2] ॥ ४६ ॥**
**सदसद्वा निदर्श्येत निदर्शनमिदं यथा ।**

"अणुमपि परकीयं हन्त सन्तो नयन्ते
गुणमधिकगुरुत्वं तद्धि तेषां स्वभावः ।
सरसिजकुहरान्तःपत्रमात्रप्रभूतं
परिमलमपि वाताः किं न विस्तारयन्ति ॥"

[1] वीरश्रीरणरङ्गमल्लनृपते P.

[2] यदि P.

"दुर्जनः परिहर्तव्यः साधुभिः[1] सख्यवैरयोः ।
श्वा भवत्यपकाराय लिहन्नपि[2] दशन्नपि ॥"

सहोक्तिः—

**सहोक्तिः सहभावस्य वस्तूनां कथनं यथा ॥ ४७ ॥**

"[3]सह दीर्घा मम श्वासैरिमाः संप्रति रात्रयः ।
पाण्डुराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः ॥"

"कम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः ।
[4]तद्गजालानतां प्राप्तैरक्षोलैः सार्धमानताः ॥"

परिवृत्तिः—

**अर्थानां यो विनिमयः परिवृत्तिस्तु सा यथा ।**

"क्रयविक्रयदक्षस्ते खड्गो भूपाल वैरिणाम् ।
हृत्वा भूमण्डलं दत्ते रम्भायाः कुचमण्डलम् ॥"

आशीः—

**आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा ॥ ४८ ॥**

"सव्यार्धजानिः सनकादिवन्द्यः कनल्ललाटः कमलारिजूटः ।
मुदे सदैवास्तु मुमुक्षुमृग्यः श्रीकण्ठनामा[5] श्रितवत्सलो नः[6] ॥"

[1] धीमता P. G. 1.

[2] स्पृशन्नपि G. 1.

[3] दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिः सह ।
दीर्घायते मम श्वासैरिमाः संप्रति रात्रयः ॥ G. 1.

[4] गजालानपरिक्लिष्टैः A 1.

[5] नाथ; P.

[6] व; P, U.

वक्रोक्तिः—

कोपात्प्रियवदुक्तिर्या वक्रोक्तिः कथ्यते यथा ।

"साधु दूति पुनः साधु कर्तव्यं किमतः परम् ।
यन्मदर्थे विभिन्नासि[1] दन्तैरपि नखैरपि ॥"

संकरः—

नानालंकारसंयोगात्कथ्यते संकरो यथा[2] ॥ ४९ ॥

"आक्षिपन्त्यरविन्दानि मुग्धे तव मुखाम्बुजम् ।
कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥"

अलंकारप्रभेदानामनेकत्वात्पृथक्पृथक् ।
दिङ्मात्रमत्र कथितं संग्रहत्वान्न विस्तृतिः[3] ॥ ५० ॥

प्रमाणालंकाराः—

अथ प्रमाणालंकाराः कथ्यन्ते सांप्रतं क्रमात् ।
प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः ॥ ५१ ॥
अनुमानं च तच्चाथ सांख्याः शब्दं च ते अपि ।
न्यायैकदेशिनोऽप्येवमुपमानं च केचन ॥ ५२ ॥
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ।
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ॥ ५३ ॥
संभवैतिह्ययुक्तानि तानि पौराणिका जगुः ।

[1] विलग्नासि A 1. विलूनासि U.

[2] संकरः कथ्यते यथा U.

[3] विस्मृतिः A. 1.

प्रत्यक्षम्—

इन्द्रियाणामर्थयोगे यज्ज्ञानमुपजायते ॥ ५४ ॥
तत्प्रत्यक्षं समाख्यातं मनसा चेन्द्रियाणि षट् ।
प्रत्यक्षं द्विविधं निर्विकल्पकं सविकल्पकम् ॥ ५५ ॥
नामादिभिर्विशिष्टार्थविषयं सविकल्पकम् ।
अविशिष्टार्थविषयं प्रत्यक्षं निर्विकल्पकम् ॥ ५६ ॥
इन्द्रियोत्पन्नविज्ञानं प्रत्यक्षालंकृतिर्यथा ।

"क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ।
स्वादुनि [1]प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥"

निर्वृतिर्मनसो वृत्तिरिन्द्रियैरुपनीयते ॥ ५७ ॥

अनुमानम्—

हेतुना हेतुमज्ज्ञानमनुमानं तदुच्यते ।
दृष्टं सामान्यतो दृष्टमिति चास्य विधाद्वयम् ॥ ५८ ॥
पूर्वं प्रत्यक्षयोग्यार्थमन्यार्थमितरद्यथा ।

"चूर्णबभ्रु लुलितस्रगाकुलं[2] छिन्नमेखलमलक्तकाङ्कितम् ।
उत्थितस्य शयनं विलासिनस्तस्य विभ्रमरतान्यवेदयत् ॥"

"परिरम्भपरं निजं निरुन्धे करयोः केवलमेव कर्म कान्तम् ।
पुलकैः पुनरुच्यते भवत्याः पुर एव स्फुटमायताक्षि भावः ॥"

आगमः—

यथार्थदर्शिनः पुंसो यथादृष्टार्थवादिनः ॥ ५९ ॥

[1] प्रमुदिता P.

[2] श्रमाकुलं P.

**उपदेशः परार्थो य आगमः स मतो यथा ।**

"परापकारनिरतैर्दुर्जनैः सह संगतिः ।
वदामि तत्त्वं भवतो न विधेया कदाचन ॥"

उपमानम्—

**सादृश्यात्सदृशज्ञानमुपमानमिहोच्यते ॥ ६० ॥**
**अनुभूतार्थमननुभूतार्थं द्विविधं यथा ।**

"अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्षीचकार ।
सपदि गतमनस्कश्छिन्नमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥"

"तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ।
समूहस्तारकाणां यः शकटाकारमाश्रितः ॥"

अर्थापत्तिः—

**दृष्टः श्रुतोऽपि वा योऽर्थः स्वस्यैवानुपपत्तितः ॥ ६१ ॥**
**प्रसूतेऽर्थान्तरे बुद्धिं सार्थापत्तिर्मता यथा ।**

"निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ।
अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥"

"रुचिधाम्नि भर्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः ।
ज्वलनं त्विषः कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ॥"

अभावः—

**अर्थस्याविद्यमानत्वमभाव इति कथ्यते ॥ ६२ ॥**

**प्रागभावोऽथ प्रध्वंसश्चान्योन्याभाव एव च ।**
**अत्यन्ताभाव इत्येवं चतुर्धा भिद्यते यथा ॥ ६३ ॥**

" अनभ्यासेन विद्यानामसंसर्गेण धीमताम् ।
अनिग्रहेण चाक्षाणां व्यसनं जायते नृणाम् ॥ "

" धृतिरस्तमिता [1]रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः ।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥ "

" कर्णोत्पलं न चक्षुस्ते न चक्षुः श्रवणोत्पलम् ।
इति जानन्नपि जनो मन्यते दीर्घनेत्रताम् ॥ "

" सव्यापसव्यत्यजनाद् द्विरुक्तैः पञ्चेषुबाणैः पृथगर्जितासु ।
दशासु शेषा खलु तद्दशा या तया नभःपुष्पतु कोरकेण ॥ "

**संभवः—**

**आढकं संभवेद् द्रोणे सहस्रेऽपि शतं तथा ।**
**आहुरेवंविधं ज्ञानं संभवं मुनयो यथा ॥ ६४ ॥**

" ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यते मम तु कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ "

**ऐतिह्यम्—**

**[2]प्रवादपारंपर्याद्यदनिर्दिष्टप्रवक्तृकम् ।**
**ऐतिह्यमिति विज्ञेयं प्रमाणं पण्डितैर्यथा ॥ ६५ ॥**

[1] मतिः U. [2] प्रवादपारंपर्यं तु यदनिर्दिष्टवक्तृकम् U.

"यासि भीरु ननु तत्र निशीथे ध्वान्तरुद्धदशदिक्प्रविभागे ।
वर्त्मनीह वटभूरुहि यक्षस्तिष्ठतीति न जना विचरन्ति[1] ॥"

**नानाविधालंकृतिनन्द्यवर्णा कन्यामिवैनां कवितां वृणीष्व ।
अस्यां यशःसंततिवृद्धिरस्तु विवेकविद्याधर मन्नभूप[2] ॥ ६६ ॥**

इति श्रीमदमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे[3]
अलंकारनिर्णयो नाम पञ्चमः परिच्छेदः ।

---

1 निविशन्ते U.  2 मन्मभूप P.  3 सर्वालंकारसंग्रहे U.

## षष्ठः परिच्छेदः

पददोषाः—

अथ दोषाः प्रकीर्त्यन्ते पदानां प्रथमं क्रमात् ।
श्रुतिकट्वसमर्थं च च्युतसंस्कृत्यवाचकम् ॥ १ ॥
निरर्थकं चाप्रयुक्तमश्लीलं ग्राम्यमेव च ।
नेयार्थानुचितार्थे च संदिग्धं क्लिष्टमेव च ॥ २ ॥
अविमृष्टविधेयांशं विरुद्धमतिकृद्यथा ।
अप्रतीतमथैतेषां क्रमाल्लक्षणमुच्यते ॥ ३ ॥

श्रुतिकटु—

परुषाक्षरविन्यासं श्रुतिकट्विष्यते यथा ।

"अनङ्गमङ्गलगृहापाङ्गभङ्गीतरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते सदा[1] ॥"

अत्र कार्तार्थ्यमिति यत्पदं श्रुतिकटूच्यते ॥ ४ ॥

असमर्थम्—

असमर्थमभिप्रेतं यद्वक्तुं न क्षमं यथा ।

"तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः ।
सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम् ॥"

[1] कदा A.

**[1]हन्तिस्तु हिंसागत्यर्थोऽप्यसमर्थो गताविह ॥ ५ ॥**

च्युतसंस्कृति—

**शास्त्रोक्तलक्षणापेतं च्युतसंस्कृति तद्यथा ।**

" एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत्पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥ "

**न [2]याच्ञार्थे नाथते स्यादाशिष्येवात्मनेपदम् ॥ ६ ॥**

अवाचकम्—

**अवाचकं न यत्रार्थे प्रयुक्तं वक्ति तद्यथा ।**

" अवन्ध्यकोपस्य निहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः[3] ॥ "

**जीवसाधारणं जन्तुपदं नो दातृवाचकम् ॥ ७ ॥**

निरर्थकम्—

**निरर्थकं भवेत्पादपूरणैकफलं यथा ।**

" बिभर्ति [4]यश्च देहार्धे प्रियामिन्दुं हि मूर्धनि ।
स वै देवः खलु त्वां तु पुनातु मदनान्तकः ॥ "

**[5]चतुहीत्यादिशब्दानामत्र स्वार्थो न विद्यते ॥ ८ ॥**

[1] हन्तीति A 2. [2] याच्यर्थे A; G. 1. [3] न च द्विषादरः P.
[4] यः स्वदेहार्धे P. [5] तुवैहीत्यादि P.

अप्रयुक्तम्—

**आम्नातमप्यप्रयुक्तं कविभिर्नादृतं यथा ।**

“ यथायं दारुणाचारः[1] सर्वथैव[2] विभाव्यते ।
तथा मन्ये दैवतोऽसौ पिशाचो राक्षसोऽथवा ॥ ”

**पुंसि दैवतशब्दोऽयं कविभिर्न प्रयुज्यते ॥ ९ ॥**

अश्लीलम्—

**येनासभ्यः पदेनार्थो द्योत्यतेऽश्लीलमीरितम् ।**

त्रिविधमश्लीलम्—

**जुगुप्सामङ्गलव्रीडाद्योतकत्वात्[3] त्रिधा मता ॥ १० ॥**

जुगुप्साश्लीलम्—

“ लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन दधती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततया पदानतिमृते तेनाभवच्चुम्बिता ॥ ”

**अत्राननेन दधती वायुं सेति जुगुप्सितम् ।**

अमङ्गलाश्लीलम्—

“ मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽद्य जातः ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे किं करोत्वेष बर्ही ॥ ”

[1] कार; A 2. [2] सर्वदैव P. [3] व्यञ्जकत्वात् A; P.

**मत्प्रियाया विनाशादित्येतत्पदममङ्गलम् ॥ ११ ॥**

व्रीडाश्लीलम्—

"साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारान्नतां[1] भ्रुवम् ॥"

**अत्र साधनशब्दोऽयं व्रीडोत्पत्तिकरो मतः ।**

ग्राम्यम्—

**ग्रामीणयोग्यं यद् ग्राम्यं निन्द्यं नागरिकैर्यथा ॥ १२ ॥**

"राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥"

**कटिशब्दोऽत्र [2]गुह्याङ्गवाचकत्वेन गर्ह्यते ।**

नेयार्थम्—

**नेयार्थं यदसामर्थ्यमूलार्थद्योतकं यथा ॥ १३ ॥**

"शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥"

**चपेटशब्दः सामर्थ्यान्नाभिधत्ते जयं त्विह ।**

अनुचितार्थम्—

**तदेवानुचितार्थं स्याद्यस्यार्थोऽनुचितो यथा ॥ १४ ॥**

"तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥"

[1] सहेतारालितां P.

[2] गोप्याङ्ग P.

[1]व्यनक्त्युक्तं पशुपदं शूरे कातरतामिह ।

संदिग्धम्—

विवक्षितार्थादन्यच्च संदिग्धं द्योतयेद्यथा ॥ १५ ॥

"आलिङ्गितस्तत्रभवान् [2]सांपरायजयश्रिया ।
आशीःपरंपरां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥"

अत्र वन्द्यामिति पदं बन्दीकृतनमस्ययोः ।

क्लिष्टम्—

क्लिष्टं व्यवहितार्थस्य द्योतकं स्यात्पदं यथा ॥ १६ ॥

"अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥"

अत्रिलोचनसंभूतश्चन्द्रस्तज्ज्योतिरुद्गमात् ।
भासीनि कुमुदानीति क्लिष्टत्वं व्यवधानतः ॥ १७ ॥

अविमृष्टविधेयांशम्—

अविमृष्टविधेयांशं प्राधान्याद्येन तद्यथा ।

"स्रस्तां नितम्बादवलम्बमाना [3]पुनः पुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥"

प्राधान्यान्नेह निर्दिष्टो विधेयांशो द्वितीयता ॥ १८ ॥

विरुद्धमतिकृत्—

इष्टान्यदुष्टधीकारि विरुद्धमतिकृद्यथा ।

[1] व्यनक्त्यर्थं U. [2] सांपराये जयश्रिया A. [3] मुहुर्मुहुः A; P.

" सुधाकरकराकारविशारदविचेष्टितम् ।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥"

**प्रयोजनं विना मित्रमित्यत्रार्थे विवक्षिते ॥ १९ ॥**
**अकार्ये मित्रमित्यन्यो विरुद्धोऽर्थः प्रतीयते ।**

**अप्रतीतार्थम्—**

**[1]शास्त्रमात्रप्रतीतार्थमप्रतीतं मतं यथा ॥ २० ॥**

" सम्यग्ज्ञानमहाज्योत्स्नादलिताशयताजुषः[2] ।
विधीयमानमप्येतन्न भवेत्कर्म बन्धनम् ॥"

**अत्राशयपदं वासनार्थमागमसिद्धिमत् ।**

**पदैकदेशदोषाः—**

**दोषान् पदैकदेशेषु यथायोगं[3] वदाम्यहम् ॥ २१ ॥**

**श्रुतिकटु—**

" अलमतिचपलत्वात्स्वप्नमायोपमत्वा-
त्परिणतिविरसत्वात्संगमेनाङ्गनायाः ।
वयमिति शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षी विस्मरत्यन्तरात्मा ॥"

**त्वप्रत्ययस्य बाहुल्यादिह श्रुतिकटूच्यते ।**

**अवाचकम्—**

" किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥"

[1] शास्त्रमात्रप्रसिद्धार्थं P. [2] कलिता A. [3] यथायोग्यं A.

**वचःशब्देन गीःशब्दो लक्ष्यतेऽत्रेत्यवाचकम् ॥ २२ ॥**

**निरर्थकम्—**

"आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः संतापितानां दृशाम् ।
संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥"

**निरर्थकं बहुत्वं स्याद् दृशामित्येकयोषितः ।**
**[1]फलस्याकर्तृगामित्वात्कुत्रश्चाप्यात्मनेपदम् ॥ २३ ॥**

**जुगुप्साश्लीलम्—**

"यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलकेन[2] ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥"

**पूयेत्यत्र जुगुप्सार्थमश्लीलमवगम्यते ।**

**अमङ्गलाश्लीलम्—**

"अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि ।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥"

**प्रेतेत्यमङ्गलाश्लीलमत्र श्लोकेऽवगम्यते ॥ २४ ॥**

[1] फलस्य कर्त्रगामित्वात् A 2.
[2] कीलनेन P; A.

संदिग्धम्—

"कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥"

भूतपूर्वे चरड्वात्र साधुचारीति संशयः ।

वाक्यदोषाः—

प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसंधि हतवृत्तम् ॥ २५ ॥
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ।
अर्धान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम् ॥ २६ ॥
अपदस्थपदसमासं संकीर्णं गर्भितं प्रसिद्धिहतम् ।
भग्नप्रक्रममक्रमममतपरार्थं[1] रसच्युतं च तथा ॥ २७ ॥
अप्रस्तुतार्थमित्यपि भवन्ति वाक्येष्वमी मता[2] दोषाः ।

प्रतिकूलवर्णम्—

प्रतिकूलवर्णमेतद्रसानुकूलाक्षरं न यद्धि यथा ॥ २८ ॥

"अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥"

शृङ्गारे ठादीनां कठिनानां नानुकूल्यमस्तीह ।

उपहतलुप्तविसर्गम्—

उत्वौत्वे यत्र कृते लुप्तो वा स्याद्विसर्जनीयश्च ॥ २९ ॥
उपहतलुप्तविसर्गं दुष्टं तद्वाक्यमामनन्ति यथा ।

[1] पदार्थं U.

[2] A 2 omits मताः

"धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ॥"

**उपहततामाद्यार्धे याति विसर्गः परे च लुप्तत्वम् ॥ ३० ॥**

विसंधिभेदाः—

**वैरूप्यं विश्लेषोऽश्लीलत्वं कष्टता च संधेः स्युः ।**
**दोषास्ते तद्वाक्यं विसंधि विबुधाः क्रमाद्वदन्ति यथा ॥ ३१ ॥**

वैरूप्यविसंधि—

"राजन् विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
[1]ते धीबले अतितरे उचितार्थवृत्ती
आतन्वती विजयसंपदमेत्य भातः ॥"

**सकृदविहितेऽत्र दोषो विहितेऽप्यसकृच्च भवति वैरूप्यम् ।**

विश्लेषविसंधि—

"तत उदित उदारहारचारुद्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश [2]उपात्तकान्तकान्तिर्धृतमुक्तामणिवच्चकास्त्यनर्घः ॥"

**अत्र विहितेऽपि दोषो विश्लेषस्त्वसकृदेव विज्ञेयः ॥ ३२ ॥**

अश्लीलविसंधि—

"विद्यामभ्यस्यतो रात्रावेति या भवतः प्रिया ।
वनिता गुह्यकेशानां क्रमते पेलवं वनम् ॥"

[1] धीदोर्बले P. तेजोबले A 2. [2] उदात्त A 2.

**संधावश्लीलत्वं दोषोऽत्र विवेकशालिभिर्ज्ञेयः ।**

**कष्टविसंधि—**

"उर्व्यसावत्र [1]तर्वाली मर्वन्ते चार्ववस्थितिः ।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥"

**इह कष्टत्वं संधेः क्लिष्टतया कथ्यतेऽसकृद्दोषः ॥ ३३ ॥**

**हतवृत्तभेदाः—**

**अयथात्वं गुरुलघ्वोर्वर्णानां यत्र हीनताधिक्ये ।**
**भग्नच्छन्दो वाक्यं हतवृत्तं चेति तद्वदन्ति यथा ॥ ३४ ॥**

**गुरुलघ्वोरयथात्वम्—**

"कामेन पञ्चापि बाणा विमुक्ता मृगेक्षणास्वित्ययथागुरुत्वम् ।
मदनबाणा निशिताः पतन्ति वामेक्षणास्वित्ययथालघुत्वम् ॥"

**हीनवर्णम्—**

**इन्दुपादाः शिशिराः स्पृशन्तीत्यूनवर्णता ।**

**अधिकवर्णम्—**

**सहकारस्य किसलयान्यार्द्राणीत्यधिकाक्षरम् ॥ ३५ ॥**

**भग्नच्छन्दः—**

**पादान्ते मध्ये वा यतिर्विरामोऽस्य भग्नतात्र यथा ।**

"आदित्यस्य महति वंशे जातो नृपतिरेष घनकीर्तिः ।
भूरिदयालंकारः प्रभूतगुणवत्सलो जयत्यवनौ ॥"

[1] सर्वर्तौ तर्वाली P.

न्यूनपदम्—

**येन विना यद्वाक्यं न्यूनं तन्न्यूनपदमुशन्ति यथा ॥ ३६ ॥**

"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥"

**अस्माभिरिति विशेष्याभावादिह वाक्यमभिहितं न्यूनम् ।**

अधिकपदम्—

**यदभावादपि पूर्णं वाक्यं तेनाधिकपदमत्र यथा ॥ ३७ ॥**

"स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अविरुद्धसमन्वितोक्तियुक्तः प्रतिमल्लास्तमयोदयः स कोऽपि ॥"

**आकृतिपदेन वाक्यं विनापि संपूर्णमेव भवतीह ।**

कथितपदम्—

**कथितपदं तद्यस्मिन् पदस्य कथितस्य कथनमेव यथा ॥ ३८ ॥**

"अधिकरतलतल्पं कल्पितस्वापलीला
परिमिलननिमीलत्पाण्डिमा गण्डपालिः ।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥"

**लीलेति पूर्वकथितं पुनरपि लीलेति कथितमेतस्मिन् ।**

पतत्प्रकर्षम्—

**यस्मिन्नधः प्रकृष्टं पतत्प्रकर्षं तदामनन्ति यथा ॥ ३९ ॥**

"कः कः कुत्र न घुर्घुरायितघुरीघोरो[1] घुरेत्सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥"

**अत्र करिणः प्रकृष्टान्महिषाणामुपरि कीर्तनं क्रियते[2] ।**

समाप्तपुनरात्तम्—

**पुनरपि समाप्य कथितं समाप्तपुनरात्तमिति वदन्ति यथा ॥४०॥**

"क्रेंकारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां[3] रवो
झंकारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥"

**अत्र समाप्तोऽप्यर्थः पुनरप्यादीयतेऽन्त्यपदान्ते ।**

अर्थान्तरैकवाचकम्—

**अर्थान्तरैकवाचकमपरार्धगतैकवाचकं तु यथा ॥ ४१ ॥**

" मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः ।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिः शिक्षिता वीक्षिता च ॥"

**इह तच्छब्दो हेतुः सिचयान्तं मूर्ध्नि विरचयेत्यत्र ।**

[1] घुरी = सूकरतुण्डम्. [2] कुरुते U. [3] पिकानां P.

अभवन्मतयोगम् —

**अभवन्मतयोगं तद्यत्र समासे पदं गुणीभूतम् ॥ ४२ ॥**
**नान्यैः प्रधानभूतैर्लभते योगं प्रयोजनाय यथा ।**

"चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥"

**संग्रामाध्वरशब्दः समासगो दोषभावमेत्यत्र ॥ ४३ ॥**

अनभिहितवाच्यम् —

**अनभिहितवाच्यमेतद्यत्र न वक्तव्यमभ्यधायि यथा ।**

"त्वयि निसर्गरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मयि पश्यसि त्यजसि मानिनि दासजनं यतः ॥"

**अत्रावश्यं वाच्यं पश्यस्यपराधलवमपीति पदम् ॥ ४४ ॥**

अपदस्थपदम् —

**अस्थानस्थपदं तद्यत्रास्थाने स्थितं पदं हि यथा ।**

"लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकंधरेन्दुशकलेनान्तःकपोलच्छदम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितह्रीतया
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः[1] ॥"

**कुटिलाताम्रच्छविरिति नखलक्ष्मेत्यादितः पुरा वाच्यम् ॥४५॥**

[1] नः A 1.

अपदस्थसमासम्—

**अस्थानस्थसमासं यत्रास्थाने समासशालि यथा ।**

"अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणा-
त्फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥"

**क्रुद्धोक्तावत्र कृतो न समासः किंतु कविवचस्येव ॥ ४६ ॥**

संकीर्णम्—

**संकीर्णं यत्रेतरवाक्यपदानीतरत्र सन्ति यथा ।**

"किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम्[1] ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥"

**अधिकस्फुटमितरेतरवाक्यपदानां मिथः प्रवेशोऽत्र ॥ ४७ ॥**
**क्लिष्टत्वमेकवाक्ये वाक्यबहुत्वे तु भवति संकीर्णम् ।**

गर्भितम्—

**गर्भितमितरद्वाक्यं [2]वाक्यस्यैकस्य यत्र मध्येऽस्ति ॥ ४८ ॥**

"परापकारनिरतैर्दुर्जनैः सह संगतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥"

**वाक्यमिदमितरवाक्यस्थितमिह भवतो वदामि तत्त्वमिति ।**

[1] गृहाणैनम् P.

[2] वाक्यैकस्य A 2.

प्रसिद्धिहतम्—

**यत्र प्रसिद्धिहीनं प्रसिद्धिहतमुच्यते पदं तु यथा ॥ ४९ ॥**

"महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकंदरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥"

**रुतमिति[1] शब्दविशेषे न शब्दमात्रे प्रसिद्धिभाग्भवति ।**

भग्नप्रक्रमम्—

**भग्नप्रक्रममुक्तं यत्र प्रक्रान्तरूपभङ्गः स्यात् ॥ ५० ॥**

तस्य वैविध्यम्—

**तदनेकधा विभिन्नं प्रकृतिप्रत्ययमुखैः क्रमेण यथा ।**

प्रकृतिभग्नप्रक्रमम्—

"नाथे निशाया नियतेर्नियोगादस्तं गते हन्त निशापि याता ।
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति ॥"

**गत इति तु प्रक्रान्ते यातेति प्रकृतिरत्र भङ्गवती ॥ ५१ ॥**

प्रत्ययभग्नप्रक्रमम्—

"यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥"

**अत्र सुखलिप्सयेति प्रत्ययभङ्गो विविच्य विज्ञेयः ।**
**अन्येऽप्यत्र ज्ञेयाः प्रत्ययभङ्गा न तु प्रपञ्च्यन्ते ॥ ५२ ॥**

[1] रुतमिह A 1; P.

अक्रमम्—

**यत्र विहतः क्रमः स्यादक्रममिति वाक्यमामनन्ति यथा ।**

" निर्माणस्थितिसंहारहेतवो जगतां मताः ।
विष्णुत्रिलोचनाम्भोजयोनयः पालयन्तु वः[1] ॥ "

**परमेष्ठिहरिहरा इति वाच्ये भग्नः क्रमो भवत्यत्र ॥ ५३ ॥**

अमतपरार्थम्—

**अमतपरार्थं यत्र प्रकृतविरुद्धार्थकथनमेव यथा ।**

" राममन्मथशरेण ताडिता[2] दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं[3] जगाम सा ॥ "

**प्रकृतरसेऽत्र विरुद्धं शृङ्गाररसस्य वर्णनं विहितम् ॥ ५४ ॥**

रसच्युतम्—

**यत्र रसोऽस्ति न वाक्ये रसच्युतं तदिति कीर्तयन्ति यथा ।**

" एकपुच्छश्चतुष्पादः ककुद्माल्लँम्बकम्बलः ।
गोरपत्यं बलीवर्दो घासमत्ति मुखेन सः ॥ "

**जातिरपि नीरसत्वान्नालंकारोऽस्य किं तु दोषत्वम् ॥ ५५ ॥**

अप्रस्तुतार्थम्—

**अप्रस्तुतार्थमेतद्यत्राप्रस्तुतनुतिं करोति यथा ।**

" तमालश्यामलं क्षारमत्यच्छमतिफेनिलम् ।
पादेन लङ्घयामास हनूमानेष सागरम् ॥ "

[1] नः P. [2] पीडिता A 2. [3] निलयं G 3.

नात्र श्यामलतादेः कथनं तत्रोपयोगि स्यात्[1] ॥ ५६ ॥

अर्थदोषाः—

अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ।
संदिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ॥ ५७ ॥
व्यर्थीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः[2] ।
साकाङ्क्षोक्तविरुद्धौ त्यक्तपुनःस्वीकृतोऽश्लीलः ॥ ५८ ॥
विध्यनुवादविवृत्तः सहचरभिन्नोऽर्थदोषाः स्युः ।

अपुष्टः—

विशेषणानामुक्तानां फलं यत्र न विद्यते ॥ ५९ ॥
विशेष्यपोषकत्वेन सोऽपुष्टार्थो मतो यथा ।

"अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥"

विमुक्तौ विश्रमानन्दौ पुष्यतो न रवेर्जयम् ॥ ६० ॥

कष्टः—

कष्टः कृच्छ्रेण विज्ञेयः शब्दसंक्षेपतो यथा ।

"कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः ।
स तदुच्चकुचौ भवन् प्रभाझरचक्रभ्रममातनोति यत् ॥"

अत्यन्तव्यवधानेन ज्ञायतेऽर्थोऽत्र नो जवात्[3] ॥ ६१ ॥

[1] तल्लङ्घनोपयोगि स्यात् P.

[2] विशेषसामान्यपरिवृत्ताः U ; G 3.

[3] हठात् A 2 ; G 3.

व्याहतः—

**अनादृतस्यैवोत्कर्षो वाक्ये स्याद्व्याहतो यथा ।**

“ जगति जयिनस्ते ते भावा नवेन्दुकलादयः
 प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
 नयनविषयं जन्मन्येकः स एव महोत्सवः ॥”

**अनादृत्येन्दुरेखाद्यं श्लाघ्यते चन्द्रिका त्विह ॥ ६२ ॥**

पुनरुक्तः—

**[1]एक एव द्विरुक्तोऽर्थः पुनरुक्तो मतो यथा ।**

“ अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
 सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
 ताते चापद्वितीये वहति [2]रणधुरां को भयस्यावकाशः ॥”

**पौनरुक्त्यमिहार्थस्य प्रसिद्धं समपादयोः ॥ ६३ ॥**

दुष्क्रमः—

**वक्तव्ययोरर्थयोर्यो व्युत्क्रमो दुष्क्रमो यथा ।**

“ भूपालरत्न निर्दैन्य प्रसन्न प्रथितोत्सव ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥”

**मातङ्गस्यात्र निर्देशो न्याय्यः प्रागेव बुध्यताम् ॥ ६४ ॥**

[1] योऽर्थो यत्र द्विरुक्तः स्यात् P. [2] रणधुरं P.

ग्राम्यः—

**निर्लज्जैः कथितो योऽर्थो ग्राम्योऽसावुच्यते यथा ।**

" सपङ्कतलविन्यस्तसारङ्गखुरसंनिभम् ।
अरोमशं मृगाक्षीणां वन्दे मदनमन्दिरम् ॥"

**इह ग्राम्यत्वमर्थस्य प्रसिद्धमवगम्यते ॥ ६५ ॥**

संदिग्धः—

**द्वेधा प्रतीयमानोऽर्थः संदिग्धोऽनिर्णयाद्यथा ।**

" मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥"

**विरक्तो वात्र रक्तो वा वक्ता चेन्निर्णयो भवेत् ॥ ६६ ॥**

निर्हेतुः—

**निर्हेतुको विना हेतुं कार्यं यत्रोच्यते यथा ।**

" गृहीतं येनासीः परपरिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमपि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥"

**विमोक्ष्येऽहमपीत्यत्र न हेतुः शस्त्रमोचने ॥ ६७ ॥**

प्रसिद्धिविरुद्धः—

**स प्रसिद्धिविरुद्धो यो लोकैरविदितो यथा ।**

"इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम्[1] ।
इदं तद्दुःसाधं कलय परमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥"

**चक्रं मनोभवस्यास्त्रमप्रसिद्धमिहोच्यते ॥ ६८ ॥**

**विद्याविरुद्धः—**

**विद्याविरुद्धः स्मृत्यादिविरोधात्कथितो यथा ।**

"सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥"

**उपरागं विना रात्रौ स्नानं तु स्मृतिगर्हितम् ॥ ६९ ॥**

**व्यर्थीकृतः—**

**व्यर्थीकृतो यच्छ्लाघ्यानां व्यर्थत्वापादनं यथा ।**

"प्राप्ताः श्रियः सकलकामदुघास्ततः किं
न्यस्तं पदं शिरसि विद्विषतां ततः किम् ।
संतर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥"

**अत्र व्यर्थत्वमेवोक्तमर्थानां न प्रयोजनम् ॥ ७० ॥**

**सनियमः—**

**नियमोऽनुचितेऽर्थे यः स स्यात्सनियमो यथा ।**

[1] धिया P.

"कटु रटति निकटवर्ती नाराटष्टिट्टिभः पटुर्यत्र[1] ।
अपसरणमेव शरणं मौनं वा राजहंसस्य ॥"

**अत्रापसारणे युक्तो नियमो नैवकारतः[2] ॥ ७१ ॥**
**मौनं वेत्यन्यपक्षस्य संभवाद् दूषणं हि यत्[3] ।**

अनियमः—

**नियमे सति वक्तव्ये तत्त्यागोऽनियमो यथा ॥ ७२ ॥**

"चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
हतान्येकेन रामेण मानुषेण पदातिना ॥"

**एकेनैवेति वक्तव्ये नैवात्र नियमः कृतः ।**

विशेषपरिवृत्तः—

**वाच्ये विशेषे सामान्याद्विशेषव्यत्ययो यथा ॥ ७३ ॥**

"श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम्[4] ।
चन्द्रं चूर्णयत क्षणेन कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥"

**अत्र ज्योत्स्नीमिति[5] श्यामाविशेषोक्तिर्विशिष्यते ।**

सामान्यपरिवृत्तः—

**सामान्योक्तौ विशेषोक्तिः सामान्यव्यत्ययो यथा ॥ ७४ ॥**

[1] वाचाटष्टिट्टिभो यत्र P; U; G. 3. [2] नैव कार्यतः A 1; U.
[3] तत् A 1; P. [4] श्रियम् P. [5] ज्योत्स्नीति हि A.

"कल्लोलवेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि मकराकर मावमंस्थाः ।
किं कौस्तुभेन भवतो विहितं न नाम
यत्र प्रसारितकरः पुरुषोत्तमोऽपि ॥"

**रत्नसामान्यतो नाम सिन्धोरत्र न कौस्तुभात् ।**

**साकाङ्क्षः—**

**यत्र बाह्यार्थसापेक्षः साकाङ्क्षो गीयते यथा ॥ ७५ ॥**

"द्वारं द्वारमितो वृष्टिः शीतवातातिदुःसहा ।
दिशो नीरन्ध्रतिमिरनिगीर्णा इव निष्प्रभाः ॥"

**आकाङ्क्षत्यत्र बाह्यार्थं त्वरयोद्घाट्यतामिति ।**

**उक्तविरुद्धः—**

**स स्यादुक्तविरुद्धोऽर्थो विरुद्धः स्वोक्तयोर्यथा ॥ ७६ ॥**

"न स्वर्गो नापि नरको धर्माधर्मौ न तत्फले ।
धन्योऽसि यस्त्वं सर्वस्वं ब्राह्मणेभ्यः प्रयच्छसि ॥"

**परलोकाद्यभावोक्तेर्विरुद्धं दानकीर्तनम् ।**

**त्यक्तपुनःस्वीकृतः—**

**त्यक्तोऽपि पुनरुपात्तस्त्यक्तपुनःस्वीकृतो मतः स यथा ॥ ७७ ॥**

"अरे रामाहस्ताभरण भसलश्रेणिशरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन ।
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥"

**विरहिदमनेति मुक्त्वा स्वीकुरुते सखिपदेन पुनरेव ।**

**अश्लीलः—**

**अश्लीलो मुख्यार्थादन्यो व्रीडाकरः स यथा[1] ॥ ७८ ॥**

"हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
[2]यदास्य जायते पातो न तदा[3] पुनरुन्नतिः ॥"

**अत्र ध्वन्यो मुख्यादन्योऽर्थो जायते हि[4] लज्जायै ।**

**विध्यनुवादविवृत्तः—**

**विध्यनुवादविवृत्तो विध्यनुवादौ विवर्तितौ स यथा ॥ ७९ ॥**

"प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाद्य दोःशालिना-
मपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥"

**शयितः परिबोध्यस इति वक्तव्यमिहानुवादविधियुगलम् ।**

**सहचरभिन्नः—**

**सहोत्कृष्टैर्निकृष्टोक्तिर्भिन्नः सहचरैर्यथा ॥ ८० ॥**

"श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना नयेन चालंक्रियते नरेन्द्रता ॥"

**उत्कृष्टेभ्यः श्रुतादिभ्यो भिन्ने व्यसनमूर्खते ।**

[1] व्रीडाकरो मतः स यथा P. [2] यथास्य A 1. यथा संजायते P.
[3] तथा A 1; P. [4] मेहतिर्हि U. G 3.

दोषाणां गुणत्वम्—

**दोषा एव गुणीभावं प्राप्नुवन्ति क्वचित्क्वचित् ॥ ८१ ॥**

श्रुतिकटुनोऽदुष्टत्वम्—

"सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनताप्सीत्समरंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं व्यवधीदरींश्च ॥"

**उदाहरणकाव्यत्वान्न[1] दुष्टं श्रुतिकट्वपि ।**
**प्रहेलिकाद्व्यर्थबन्धैकाक्षरद्व्यक्षरादिषु ॥ ८२ ॥**
**क्लिष्टासमर्थनेयार्थावाचकाद्या न दूषिताः ।**

असमर्थनेयार्थयोरदुष्टत्वम्—

"देवराजो मया दृष्टो वारिवारणमस्तके ।
भक्षयित्वार्कपत्राणि विषं पीत्वा क्षयं गतः ॥"

**वारिवारणशब्दोऽत्र नेयार्थोऽपि न दुष्यति ॥ ८३ ॥**
**असमर्थावपि विषक्षयौ स्वार्थे न दुष्यतः ।**
**अन्यदप्येवमेवोह्यमुदाहरणदर्शने ॥ ८४ ॥**

क्लिष्टनिरर्थकयोरदुष्टत्वम्—

"बल्यरिक्त्वरी पातां साम्बुव्यम्बुघनोपमौ ।
सदृशौ बककाकाभ्यां चवैतुहिचवैतुहि ॥"

**बल्यरिक्त्वरीत्यत्र क्लिष्टसंध्यप्यदूषणम् ।**
**निरर्थकमदुष्टं स्याद्वाक्ये छान्दसभाषिते ॥ ८५ ॥**

[1] वाक्यत्वान्न P.

अश्लीलस्यादुष्टत्वम्—

" कण्डूतेरप्रतीकारादन्तर्लिङ्गाविमर्दनात् ।
न द्रवन्ति न तृप्यन्ति योषितो नीचमेहने ॥ "

**अत्र व्रीडाश्लीलमपि कामतन्त्रे न दूषणम् ।**

" उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः[1] कस्य जायते ॥ "

**जुगुप्साश्लीलमप्यत्र विरक्तोक्तौ न दूषणम् ॥ ८६ ॥**

संदिग्धस्यादुष्टत्वम्—

" पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥ "

**संदिग्धमप्यदुष्टं स्याद्वक्तृबोद्धव्यभेदतः ।**

अप्रतीतस्यादुष्टत्वम्—

" ग्रहैस्ततः पञ्चभिरुच्चसंस्थितैरसूर्यगैः सूचितभाग्यसंपदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ "

**अप्रतीतमपि ज्योतिः प्रसङ्गेऽत्र न दुष्यति ॥ ८७ ॥**

न्यूनपदस्यादुष्टत्वम्—

" गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलत्काञ्चीनितम्बाम्बरा[2] ।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥ "

[1] अक्रिमेः A; G 3.

[2] प्रदेशाम्बरा A; G. 3.

**मामेत्यादि न्यूनपदं पारवश्ये न दूषणम् ।**

अधिकपदस्य गुणत्वम्—

"यद्वञ्चनाहितमतिर्बहुचाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥"

**गुणोऽन्ययोगव्यावृत्त्यै विदन्तीत्यधिकं पदम् ॥ ८८ ॥**

पुनरुक्तस्य गुणत्वम्—

**विषादे विस्मये हर्षे कोपे दैन्येऽवधारणे ।
प्रसादनेऽनुकम्पायां द्विस्त्रिरुक्तं न दुष्यति ॥ ८९ ॥**

"म्रियतां म्रियतां तन्वी किं वा जीवितयानया ।
जीवितं सखि मानाय नैष चेज्जीवितेन किम् ॥"

**अस्मिन् विषण्णवचने पौनरुक्त्यं गुणो मतः ।**

"अहो सत्त्वमहो धैर्यमहो दानमहो क्षमा ।
अहो शीलमहो पुण्यं हरिश्चन्द्रस्य[1] भूपतेः ॥"

**अहोपदानामत्रोक्तिर्बहुधा विस्मये गुणः ॥ ९० ॥**

"सेयं मन्मथसर्वस्वं मन्मनोगृहदेवता ।
लावण्याम्भोधिलहरी दृश्यतां दृश्यतां सखे ॥"

**हृष्टस्य वाक्यभणितौ द्विरुक्तिरिह भूषणम् ।**

[1] हरिचन्द्रस्य P; U.

"अस्तु नीराक्षसा पृथ्वी निःशल्यास्तु जगत्त्रयी ।
तिष्ठ तिष्ठ क्षणं संख्ये हन्मि त्वां दशकंधर ॥"

**क्रुद्धस्य वचनेऽप्यत्र द्विरुक्तिर्नैव दुष्यति ॥ ९१ ॥**

"देहि देहीति वदतो देहि देहीति यो वदेत् ।
देही देहान्तरं प्राप्य पुनर्देहीति नो वदेत् ॥"

**दैन्येऽपि तद्वदेवात्र पुनरुक्तिर्न दूषणम् ।**

"धन्विनां मृगवनेषु गच्छतां रूपकोटिकथनेऽधिका क्षतिः[1] ।
खिद्यते किमनिशं प्रयोजनादेकदा नरवधः[2] कृतः कृतः ॥"

**अत्रावधारणे तद्वत्पुनरुक्तिर्न दुष्यति[3] ॥ ९२ ॥**

"प्रसीद कोपमुन्मुञ्च प्रसीद कलभाषिणि ।
तव तन्वि पदोपान्ते लुठत्ययमयं प्रियः ॥"

**उक्तस्यैवात्र कथनं गुण एव प्रसादने ।**

"हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥"

**गुण एवानुकम्पायामत्रापि पुनरुक्तता ॥ ९३ ॥**

गर्भितस्यादुष्टत्वम्—

"दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धौ चापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।

[1] अपि का क्षतिः P. [2] वासरव्रधः U; G. 3.

[3] दूषणम् U.

विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं तत्रैव[1] चास्तं गतम् ॥"

**अद्भुते गर्भितमपि वदन्तेत्याद्यदूषणम् ।**

**विरुद्धस्य गुणत्वम्—**

"नेयं निशा दिवस एव भवेत्कथं मे
निद्रान्यथा नयनयोर्युगलं न याति ।
नायं शशी तपन एव तनोति ताप-
मुत्पात एव यदि मास्तु विभान्ति ताराः ॥"

**दिवसत्वरवित्वोक्तिर्विरहे रात्रिचन्द्रयोः ॥ ९४ ॥**
**सा प्रत्यक्षविरुद्धापि गुणोऽत्र न तु दूषणम् ।**

**नेयार्थस्यादोषत्वम्—**

"मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥"

**प्रसिद्धकारणैर्नेयो नाशयत्वित्यदूषणम् ॥ ९५ ॥**

**निर्हेतोर्गुणत्वम्—**

"चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥"

**दिवा न द्योतते चन्द्रः पद्मं नोज्जृम्भते निशि ।**
**प्रसिद्धत्वादिहानुक्तौ निर्हेतुकथनं गुणः ॥ ९६ ॥**

[1] यत्रैव G. 3.

कविसमयसिद्धा विशेषाः—

हासस्य यशसः शौक्ल्यं लौहित्यं क्रोधरागयोः ।
ज्योत्स्नापानं चकोराणां कार्ष्ण्यं पापायशोदिवाम् ॥ ९७ ॥
चन्द्रचन्दनकर्पूरवनवाततटित्वताम्[1] ।
मुक्ताहारस्रगादीनां दाहकत्वं वियोगिषु ॥ ९८ ॥
वेधकत्वं कटाक्षस्य पानं रूपस्य दृष्टिभिः ।
इन्दीवरारविन्दादि सरिदर्णवयोरपि ॥ ९९ ॥
कुसुमभ्रमराः काण्डधनुर्ज्याश्च मनोभुवः ।
तच्छराणां मनो लक्ष्यं वसन्तः सुहृदिष्यते ॥ १०० ॥
एवमादि कृतं काव्येष्वसदेव प्रसिद्धिमत् ।
कर्णावतंसश्च शिरःशेखरः कर्णकुण्डलम् ॥ १०१ ॥
संनिधानादिबोधार्थमेषु कर्णादिकीर्तनम् ।
मुक्ताहारपदं त्वन्यरत्नयोगनिवृत्तये ॥ १०२ ॥
आरूढत्वप्रतीत्यर्थं धनुर्ज्यापदमुच्यते ।
पुष्पमालेति सुरभिपुष्पनिर्मितताधिये[2] ॥ १०३ ॥
कलभे करिशब्दोक्तिस्तन्मात्रत्वप्रतीतये ।
इत्यादिषु परिज्ञेयं स्थितेष्वेव समर्थनम् ॥ १०४ ॥

रसदोषाः—

आभासो रसभावानां स्वशब्दग्रहणं तथा ।
कष्टकल्पनया व्याप्तिरनुभावविभावयोः ॥ १०५ ॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।

1 वाटीतटित्वताम् U.　　2 निर्मितसूक्तये P.

अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः[1] ॥ १०६ ॥
अङ्गिनोऽननुसंधानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशः ॥ १०७ ॥

रसाभासः—

आभासत्वं रसस्य स्यादनौचित्याद् द्विधा यथा ।

"स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमुखमखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥"

अनेककामिविषयस्त्वभिलाषोऽत्र लक्ष्यते ॥ १०८ ॥

"दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतहस्तपल्लवा ।
शीतलेन निरवापयत् क्षणं मौलिचन्द्रशकलेन शूलिनः ॥"

पित्रोरिवात्र शिवयोर्नार्हि संभोगवर्णनम् ।

भावाभासः—

भावानामप्यनौचित्यादाभासत्वं मतं यथा ॥ १०९ ॥

"राकासुधाकरमुखी तरलायताक्षी
सस्मेरयौवनतरङ्गितविभ्रमाढ्या ।
तत्किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥"

[1] विस्मृतिः U.

अनिच्छन्त्यामिवामुत्र चिन्ता काचिद्विगर्हिता ।
रसभावान्तरेऽप्येवमाभासत्वमिवेक्ष्यताम् ॥ ११० ॥

रसभावयोः स्वशब्दग्रहणे दोषः—

दोषा रसानां भावानां स्वशब्दग्रहणाद्यथा ।

रसस्य स्वशब्दग्रहणम्—

"आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुभगामभिरामरूपाम् ।
पश्यैष चाल्पमभिसृत्य विवर्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति ॥"

अत्र स्वशब्दग्रहणाच्छृङ्गारेति[1] विदुष्यति ॥ १११ ॥

भावस्य स्वशब्दग्रहणम्—

"सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥"

व्रीडादिभिः पदैर्दोषो ग्रहणं व्यभिचारिणाम् ।

"संप्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
झणत्कारैः श्रुतिगतैरुत्साहस्तत्र कोऽप्यभूत् ॥"

उत्साहस्य स्थायिनोऽत्र दोषस्तच्छब्दकीर्तनम् ॥ ११२ ॥

[1] शृङ्गारेति हि दुष्यति A; G 1.

कष्टकल्पना—

"परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः ।
इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥"

**रत्यादिपरिहारादेः करुणेऽपि च संभवात् ।**
**विप्रलम्भेऽनुभावानामत्र स्यात्कष्टकल्पना ॥ ११३ ॥**

प्रतिकूलग्रहणम्—

"प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निदानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥"

**शान्तेऽनुभावः कालस्यानित्यत्वपरिकीर्तनम् ।**
**शृङ्गारे प्रतिकूलं तत्प्रतिकूलग्रहस्त्विह ॥ ११४ ॥**
**इत्यादिरसदोषाणां प्रबन्धविषयत्वतः ।**
**प्रबन्धेष्वेव लक्ष्याणि ज्ञेयानि रसकोविदैः ॥ ११५ ॥**
**सर्वदोषरहितं सगुणं यत्काव्यमव्ययशस्करमुर्व्याम् ।**
**त्वच्चरित्रमिव साधु निषेव्यं गर्वितारियम गण्डरगण्ड ॥ ११६ ॥**

इति श्रीमदमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे[1]
दोषगुणनिर्णयो नाम षष्ठः परिच्छेदः

---

[1] सर्वालंकारसंग्रहे A.

# सप्तमः परिच्छेदः

नाट्यप्रशंसा—

चतुर्वेदसमुद्भूतं साराभिनयभूषितम् ।
धर्म्यमर्थ्यं यशस्यं च नाट्यं को नाभिनन्दति ॥ १ ॥
न तच्छास्त्रं न सा विद्या न तच्छिल्पं न ताः कलाः ।
नासौ योगो न तज्ज्ञानं नाटके यन्न दृश्यते[1] ॥ २ ॥

रूपकम्—

अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते ।
रूपकं [2]तत्समारोपाद्बहुधात्र रसाश्रयम् ॥ ३ ॥
वस्तुभेदान्नेतृभेदाद्रसभेदाच्च तद्विधा ।

इतिवृत्तम्—

इतिवृत्तं वस्तु चेति कथाया नाम तद् द्विधा ॥ ४ ॥

इतिवृत्तभेदाः—

तत्राधिकारिकं मुख्यमङ्गं प्रासङ्गिकं विदुः ।
प्रख्यातं मिश्रमुत्पाद्यमिति तत् त्रिविधं तथा[3] ॥ ५ ॥

[1] रस्यते G. 3 ; U.

[2] तत्समारोपादाहुः पात्रं रसाश्रयम् U.

[3] इति तद् द्विविधं त्रिधा A 1.

इतिहासादिषु ख्यातं प्रख्यातमिति कीर्तितम् ।
उत्पाद्यं कविक्लृप्तं स्यान्मिश्रं तद्द्वयसंकरात् ॥ ६ ॥

अर्थप्रकृतयः—

बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।
अर्थप्रकृतयः पञ्च क्रमेण परिकीर्तिताः ॥ ७ ॥

बीजम्—

स्वल्पमेव समुद्दिष्टं पश्चाद्विस्तार्यनेकधा ।
हेतुः [1]कार्यस्य सिद्धौ यस्तद्बीजं बीजवद्यथा ॥ ८ ॥

"कुमुदिनीपरिभोगकृतागसं [2]मधुकरं नलिनीं मलयानिलः ।
नयति संप्रति नर्मसुहृज्जनः कलुषितां रमणीमिव कामुकम् ॥"

बिन्दुः—

अवान्तरार्थकथनाद्वस्तुविच्छेदसंभवे[3] ।
तस्याविच्छेदकथनं बिन्दुरित्युच्यते यथा ॥ ९ ॥

"कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनायासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥"

पताका—

प्रासङ्गिककथात्यर्थं या दूरमनुवर्तते ।
सा पताका समाख्याता सुग्रीवचरितं यथा ॥ १० ॥

पताकास्थानकम्—

भाविनः प्रस्तुतार्थस्य यदन्योक्त्यैव सूचनम् ।
पताकास्थानकं तुल्यसंविधानविशेषणम् ॥ ११ ॥

[1] कार्यप्रसिद्धौ यः U. [2] मधुकृतं A. [3] विच्छेदनं यतः A 1.

"यातोऽस्मि पद्मनयने समयो ममैष
सुप्ता मयैव भवती प्रतिबोधनीया ।
प्रत्यायनामयमितीव सरोरुहिण्याः
सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥"

"उद्दामोत्कलिकां विपाण्डुररुचिं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलच्छवि मुखं देव्याः करिष्याम्यहम् ॥"

[1]**आद्यं तुल्यात्संविधानाद् द्वितीयं तद्विशेषणात् ।**

**प्रकरी—**

**प्रासङ्गिककथैवैकदेशसंबन्धकीर्तिता ॥ १२ ॥**
**प्रकरी नाम सा ज्ञेया जटायुचरितं यथा ।**

**कार्यम्—**

**कार्यं फलं त्रिवर्गं स्यादेकानेकानुबन्धवत् ॥ १३ ॥**

**कार्यावस्थाः—**

**आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ।**

**आरम्भः—**

**औत्सुक्यमात्रमारम्भः फललाभाय तद्यथा ॥ १४ ॥**

"आरम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ दैवेनेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाचारी भीत एवास्मि भर्तुः ॥"

[1] एकं A 1.

यत्नः—

**तद्लाभे प्रयत्नः स्याद्व्यापारस्त्वरया यथा ।**

"राजा—वयस्य, एक एव मालवेश्वरोऽस्माभिरभियातव्यः । तदुद्धरणाय त्वरिततरं प्रयतामहे ।"

प्राप्त्याशा—

**उपायापायशङ्काभ्यां प्राप्त्याशा संभवो यथा ॥ १५ ॥**

"राजा—

मन्त्रिनिरुद्धप्रसराऽप्यस्मत्कार्यानुरोधेन ।
[1]भिन्नबदरीव संप्रति समागमाशा प्रवर्तते शतधा ॥"

नियताप्तिः—

**अपायाभावतः प्राप्तिर्नियताप्तिर्मता यथा ।**

"नवमालिका—अय्य, एव्वं ण मंतव्वं । णिरवाअं साअरलंघणं उवाअदो संपादिदं । इदो वरं मम पिअसही तुह अंकगदेव्व मंतव्वा ।"

(आर्य, एवं न मन्तव्यम् । निरपायं सागरलङ्घनमुपायतः संपादितम् । इतः परं मम प्रियसखी तवाङ्कगतैव मन्तव्या ।)

फलागमः—

**समग्रफलसंपत्तिः फलयोगो मतो यथा ॥ १६ ॥**

पुरोधाः—

"कलितानि पदानि सप्त साक्षिण्यनले वामुभयोरतोऽस्तु सख्यम् ।
शिवयोरिव शाश्वतैकरस्यं भवतोर्यावदशीतशीतभानू ॥"

[1] भिन्नकबरीव A 1.

आरम्भादिभिरेताभिरवस्थाभिः समन्वितम् ।
मुखादिसंधिरूपेण जातं बीजादिपञ्चकम् ॥ १७ ॥

संधिः—

अवान्तरार्थसंबन्धः संधिरेकान्वये सति ।

पञ्च संधयः—

मुखं प्रतिमुखं चैव गर्भश्च तदनन्तरम् ॥ १८ ॥
विमर्शोऽन्ते निर्वहणमित्यमी पञ्च संधयः ।

मुखम्—

मुखं बीजसमुत्पत्तिर्नानार्थरससंभवा ॥ १९ ॥

मुखसंध्यङ्गानि—

अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ।
उपक्षेपः परिकरः परिन्यासो विलोभनम् ॥ २० ॥
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।
उद्भेदभेदकरणान्यन्वर्थान्यथ लक्षणम् ॥ २१ ॥

उपक्षेपः—

उपक्षेपस्तु बीजेन वस्तुनो योजनं यथा ।

राजा—

"कुत्र सा कुवलयेक्षणा मया वीक्षितोपवनभूविहारिणी ।
शम्बरारिशरदेवतेव मे मानसं [1]तुदति मत्तकाशिनी ॥"
वयस्य, किं तत्र व्रजामः ?

[1] तपति U.

परिकरः—

**बहुलीकरणं तस्य युक्त्या परिकरो यथा ॥ २२ ॥**

"सौरभः—वयस्य, न केवलं त्वदीयमेव हृदयं समाकर्षति । अपितु,

अव्याजमुग्धमधुरैररविन्दकोण-
निर्यन्मधुव्रतनिकायनिभैः कटाक्षैः ।
भावावतारपिशुनैरयि भो वयस्य
बाला भवन्तमकरोदपदेशलक्ष्यम् ॥"

परिन्यासः—

**परिन्यासस्तु कार्यस्य निष्पन्नप्रायता यथा ।**

"कैरवः—वयस्य, यदि मामुद्दिश्य प्रेषयति, तर्हि,

मदनस्य मया राज्यं प्राज्यं बलवता हृतम् ।
पुण्यैः पुरातनैरद्य प्रायेण फलितं मम ॥"

विलोभनम्—

**विलोभनं च तत्प्रोक्तं मानसोल्लासकृद्यथा ॥ २३ ॥**

"कैरवः—वयस्य, कोपे तु नैवम् । यतः,

बालातपक्रान्तपयोजपत्रमित्रे तु नेत्रे मिषतो न भीमे ।
आकर्णकृष्टाङ्गजचापयष्टिभुग्ने भ्रुवौ न भ्रुकुटिस्तयोस्तु ॥"

युक्तिः—

**संप्रधारणमर्थानां युक्तिरित्युच्यते यथा ।**

"बन्दी—देव, सत्यमेतत् ।

नृत्ताचार्यो मम सुहृद्भूत्तत्र[1] कंदर्पदास-

स्तेनावश्यं पितुरभिनवं नृत्तमादर्शयेति ।

बद्ध्वा पत्रं सलिपि नगरद्वारि तेनानुशिष्ट-

स्तुष्टेनाहं दुहितृभवने चित्रकृत्येऽलिखं त्वाम् ॥"

प्राप्तिः—

**या चित्तस्य सुखप्राप्तिः सा प्राप्तिर्गीयते यथा ॥ २४ ॥**

"राजा—(स्वगतम्)

[2]आलोच्य वाक्यं स्वयमन्तरात्मा हृष्टः परानन्दमिव प्रविष्टः ।

प्रायेण भावीनि भवन्ति वस्तून्यालोच्यमानानि मनोहराणि ॥"

समाधानम्—

**बीजागमः समाधानमिति संकीर्त्यते यथा ।**

"राजा—(अपवार्य) वयस्य, वयं निलीना एव निवसामः ।

अनुरागमञ्जनाया मुखेन यः श्रोत्रपेयमाधुर्यम् ।

आकर्णयत्यजस्रं स एव मदनस्य शास्ति[3] साम्राज्यम् ॥"

विधानम्—

**सुखदुःखकरं यत्स्याद्विधानं तद्विदुर्यथा ॥ २५ ॥**

"कैरवः—वयस्य, पुरस्तादवलोकय तस्यास्ताम्बूलकरङ्कवाहिनीम्;

[1] दत्र G 3.

[2] आलोक्य U ; G 3.

[3] U omits शास्ति.

आज्ञेव शम्बररिपोरविलङ्घनीया
वाञ्छेव विग्रहवती वशगा दृशोर्मे ।
अन्यार्थमेव किमुतापणमभ्युपैति
संदेशमानयति सा किमु सारसाक्ष्याः ॥

अतो मनसि मे मोदखेदौ[1] वर्तेते ।"

परिभावना—

**अद्भुतापादनं यत्स्यात्परिभावो मतो यथा ।**

"कैरवः—वयस्य पश्य ;
रागोत्थिता रतिपतेरिव राज्यलक्ष्मी-
र्नारीललाम नयनोत्करपूर्वपुण्यम् ।
आलिङ्गितुं मलयमारुतमञ्जसासौ
वाञ्छत्यहो सुभगतास्य तु वागतीता ॥"

उद्भेदः—

**गूढार्थभेदनं यत्स्यादुद्भेदः प्रोच्यते यथा ॥ २६ ॥**

"विदूषकः—वअस्स, विसुमरिदं तुए । जं ताए एव्व अहं पि सरिसं एव्व पेक्खामित्ति भणिदं ।

(वयस्य, विस्मृतं त्वया । यत्तयैवाहमपि सदृशमेव पश्यामीति भणितम् ।)

राजा—सखे तदिदानीं संस्मृतम् ।"

भेदः—

**प्रारब्धकार्यसिध्यर्थं भेदः प्रोत्साहना यथा ।**

[1] मोदजडौ A 1.

"सौरभः—कलिके, त्वमग्रतो गच्छ; मार्गं दर्शय।"

करणम्—

**उद्दिष्टार्थस्य सिध्यर्थं प्रारम्भः करणं यथा॥ २७॥**

"राजा—शुद्धपार्ष्णिना हि जेतव्या रिपवः। ततो गौडेशमुन्मूल्य [1]मालवेशमभियास्यामः।

बन्दी—देव,

अकृते तु घनावरोधभेदे सति सायंतनमारुतेन ते न।
अवलोकयितुं सुखेन शक्या शशिरेखा शमिताखिलाभितापा॥"

मुखे आवश्यकान्यङ्गानि—

**उपक्षेपः परिकरः परिन्यासस्तथैव च।**
**युक्त्युद्भेदौ समाधानं मुखे वाच्यान्यवश्यतः॥ २८॥**

प्रतिमुखम्—

**लक्ष्यालक्ष्य इवोद्भेदस्तस्य प्रतिमुखं भवेत्।**

प्रतिमुखसंध्यङ्गानि—

**बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश॥ २९॥**
**विलासः परिसर्पश्च विधूतं शमनर्मणी।**
**नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम्॥ ३०॥**
**पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि।**

[1] मागधदेशं G 3; U.

विलासः—

**रत्युद्देशेन याकाङ्क्षा विलासः स मतो यथा ॥ ३१ ॥**

"राजा—(विहस्य) वयस्य,

विदितरसो विभवयुतो युवा यदि स्यात्सचेतनः सदृशीम् ।
कः खलु कामयमानां कान्तामप्राप्य कातरो न भवेत् ॥"

परिसर्पः—

**दृष्टनष्टानुसर्पः स्यात्परिसर्पो मतो यथा ।**

"राजा—(ससंभ्रमम्) वयस्य, त्वद्वचनचातुरीविस्मृतविषयान्तरो [1]गम्यमानमपि पन्थानं न गणयामि । क्वासौ नगरी?

(इत्युपसर्पति)"

विधूतम्—

**अरतिर्मनसो या स्याद्विधूतं कथ्यते यथा ॥ ३२ ॥**

"राजा—(निर्वर्ण्य सानन्दम्) वयस्य, समाकर्णय ।
दूराद्दर्शनवाञ्छा सविधगतायां समागमोत्कण्ठा ।
अप्राप्तायामधुना कथमिव मनसो रतिस्तस्याम् ॥"

शमः—

**तस्यास्तु शान्तिररतेः शम इत्युच्यते यथा ।**

"राजा—(निर्वर्ण्य सानन्दम्) वयस्य, मम हि;
दृढविरहविदाहमेष दृष्टो हरति चरो दयितासखीसमेतः ।
शशधर इव चन्द्रिकासनाथो निशि जगतो नितरां निदाघतापम् ॥"

[1] अवगम्यमानमपि U.

नर्म—

**परिहासकृतं वाक्यं कथ्यते नर्म तद्यथा ॥ ३३ ॥**

"विदूषकः—वअस्स, इह एव्व रमणिज्जा उवट्ठिदा तुह पिआ होदु ।

(वयस्य, इहैव रमणीयोपस्थिता तव प्रिया भवतु ।)

"राजा—(विहस्य) वयस्य, अधमवृत्तिफलमवलम्बसे ।"

नर्मद्युतिः—

**द्युतिर्नर्मसमुद्भूता नर्मद्युतिरसौ यथा ।**

"कः खलु धीरोदारां गभीरसलिलां पिपासुरपि गङ्गाम् ।
दूरादपि नासीदेदारादपि सारिणीं समुल्लङ्घ्य ॥"

प्रगमनम्—

**उत्तरादुत्तरं वाक्यं प्रगमः कथ्यते यथा ॥ ३४ ॥**

"मङ्गलवती—

वत्से वारं वारं वचनानि मयाद्य वर्णितानि तव ।
विगलन्ति कर्णविवराद्भग्नाद्भाण्डादिवाशु सलिलानि ॥

कौमुदी—

[1]माए मह प्परूडो दुव्वारदमो ण होदि किं मअणो ।
पज्जलदि किं ण पुण्णो अग्गिज्जालेव्व विअणपवणेहिं ॥

(मातर्मम प्ररूढो दुर्वारतमो न भवति किं मदनः ।
प्रज्वलति किं न पूर्णोऽग्निज्वाल एव व्यजनपवनैः ॥)

[1] The original MSS. read this passage thus:

माए मह प्पणिबो वारिदिदमो ण होदि किं मअणो ।
पज्जलदि ण पुण्णो अग्घिविज्जाइ विअणपवणेहिं ॥

निरोधनम्—

**निरोधनं हितार्थस्य निरोधः कथ्यते यथा ।**

"राजा—धिङ् मूर्ख,

प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा ।

रत्नावलीव कान्ता मम हस्ताद् भ्रंशिता भवता ॥"

पर्युपासनम्—

**पर्युपासनमुक्तं स्यात्क्रुद्धस्यानुनयो यथा ॥ ३५ ॥**

"अपराधमिमं क्षमस्व सख्याश्चरणौ ते मदपेक्षया गृहाण ।

अरुणप्रभयावलीढपद्मां नलिनीं ह्याशु नयेद्विकासमर्कः ॥"

पुष्पम्—

**उक्ताद्विशेषवद्वाक्यं पुष्पं संकीर्त्यते यथा ।**

"विदूषकः—भो वअस्स, सव्वधा एसो मुत्ताहारो जवकालजोग्गा अक्खमाला होदु ।

(भो वयस्य, सर्वथा एष मुक्ताहारो जपकालयोग्या अक्षमाला भवतु ।)

राजा—वयस्य, सत्यमेतत् । अन्यच्च,

आसित्वा विजने विमुक्तविषयासङ्गं मनो निश्चलं

कृत्वा हृज्जलजान्तरे प्रियतमारूपं परं दैवतम् ।

ध्यात्वा हारलतामयाक्षवलयं हस्तेन धृत्वा मया

तत्सायुज्यफलाप्तये प्रतिदिनं तन्नाम संजप्यते ॥"

वज्रम्—

**प्रत्यक्षनिष्ठुरं वाक्यं वज्रमित्युच्यते यथा ॥ ३६ ॥**

" विदूषकः—भो वअस्स, अह्माणं एदं खु दुक्करं ।
(भो वयस्य, अस्माकमिदं खलु दुष्करम्)
राजा—आः, अत्यन्तनिष्ठुरमेतद्वाक्यम् ।
विषमिव मनसो मोहनमशनिरिव नितान्तनिष्ठुरं श्रवसोः ।
प्राणप्रयाणभेरीभाङ्कारः प्रणयजलधिबडवाग्निः ॥ "

उपन्यासः—

**उपन्यासः प्रसादोक्तिरुपायेनोच्यते यथा ।**

" मङ्गलवती—
सर्वथेयं समासक्ता तस्मिंस्तामरसेक्षणे ।
भव प्रसन्ना भद्रे त्वं तेन रोषो न ते वरम् ॥ "

वर्णसंहरणम्—

**चातुर्वर्ण्योपगमनं वर्णसंहरणं यथा ॥ ३७ ॥**

" कौमुदी—एदं ण सुदं तुए ?
सव्वाणं सहि वण्णाणं बम्हणो पढमो गुरू ।
आराहणिज्जो अण्णेहिं वण्णेहिं जेण वण्णिदो ॥
(एतन्न श्रुतं त्वया ?
सर्वेषां सखि वर्णानां ब्राह्मणः प्रथमो गुरुः ।
आराधनीयोऽन्यैर्वर्णैर्येन वर्णितः ॥) "

प्रतिमुखे आवश्यकान्यङ्गानि—

**प्रगमः परिसर्पश्चोपन्यासो वज्रमेव च ।**
**पुष्पं च नियमाद्वाच्यान्यन्यानि तु यथारुचि ॥ ३८ ॥**

गर्भसंधिः—

**गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।**
**भवेन्न तु पताकात्र प्राप्त्याशा नियमाद्भवेत् ॥ ३९ ॥**

गर्भसंध्यङ्गानि—

**अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।**
**संग्रहश्चानुमानं च तोटकाधिबले तथा ॥ ४० ॥**
**उद्वेगसंभ्रमाक्षेपा अङ्गानि द्वादशास्य तु ।**

अभूताहरणम्—

**छद्मकर्म समाख्यातमभूताहरणं यथा ॥ ४१ ॥**

"सौरभः—आर्ये, किमुच्यते? छद्मनानुप्रविश्यसाधयामोऽभिलषितम् ।"

मार्गः—

**तत्त्वार्थकथनं यत्तन्मार्ग इत्युच्यते यथा ।**

"मङ्गलवती—ननु सौरभ,

कपटमिव कायवन्तं क इव विटच्छद्मना खलामेनाम् ।
अलमतिसंधातुमतस्तत्त्वं कथयामि तावतोऽर्थस्य ॥"

रूपम्—

**सवितर्कं तु यद्वाक्यं रूपं तत्कथ्यते यथा ॥ ४२ ॥**

"राजा—वयस्य,

नेयं निशा दिवस एव भवेत्कथं मे
निद्रान्यथा नयनयोर्युगलं न याति ।

नायं शशी तपन एव तनोति ताप-
मुत्पात एव यदि मास्तु विभान्ति ताराः ॥"

उदाहरणम्—

**यदुत्कर्षकरं वाक्यं तदुदाहरणं यथा ।**

"राजा—(मलयमारुतमुद्दिश्य)

मन्दोऽसि मलयमारुत कथमिव निश्वासमारुतैस्तस्याः ।
स्पर्धां करोषि मे त्वं विषायसे तेऽधुना सुधायन्ते ॥"

क्रमः—

**क्रमः संचिन्त्यमानाप्तिर्ज्ञानं भावस्य वा यथा ॥ ४३ ॥**

"राजा—(इति वदन्नेव नेत्रे निमीलयति)

विदूषकः—णोमालिए, एसो वअस्सो णिमीलिअणअणो संकप्पसमाअमसुहं अणुहोदि ।

(नवमालिके, एष वयस्यो निमीलितनयनः संकल्पसमागमसुखमनु भवति ।)"

संग्रहः—

**सामोक्तेरभिधानं च संग्रहः कथ्यते यथा ।**

"सौरभः—

अर्थैरनेकैर्जननीममुष्याश्चित्तं च दत्त्वा चिरकालमृग्यम्[1] ।
संतोषयेयं सहसैव भद्रे न चेत्कथं स्यादिह नः प्रवेशः ॥"

[1] चिन्त्यम् A 3; S.

अनुमानम्—

**लिङ्गाल्लिङ्गिपरिज्ञानमनुमानं मतं यथा[1] ॥ ४४ ॥**

"मङ्गलवती—

कारणं ज्ञायते कार्याद्धूमाद्धूमध्वजो यथा ।
अस्ति चेदर्थसंपत्तिरचिरादवलोक्यते ॥"

तोटकम्—

**ससंरम्भं तु यद्वाक्यं तोटकं कथ्यते यथा ।**

"मकरदंष्ट्रा—(ससंभ्रमम्) जुत्तं पि सच्चं भणसि । जुज्जदि खु,

चोरो मज्झ करादो हारलदं हंत संभमेण हरंतो ।
पहरइ पासाणेहिं पेच्छसि तुमं पि किमेत्थ पडिकादव्वं ॥"

(युक्तमपि सत्यं भणसि । युज्यते खलु,

चोरो मम करात् हारलतां हन्त संभ्रमेण हरन् ।
प्रहरति पाषाणैः पश्यसि त्वमपि किमत्र प्रतिकर्तव्यम् ॥)"

अधिबलम्—

**कार्यं यत्सातिसंधानं कथ्यतेऽधिबलं यथा ॥ ४५ ॥**

"सौरभः—(स्वगतम्) अस्तु नाम । तथाप्यच्युतदत्तपदार्थ-बलादेवैनामतिसंधाय साधयामि कार्यम् ।"

उद्वेगः—

**शत्रुभिर्या कृता भीतिरुद्वेगः कथ्यते यथा ।**

[1] अनुमानं तु तद्यथा U ; G 3 ; S.

"मकरदंष्ट्रा—ता राअउत्तस्स पुण्णमुत्तिणो किअमाणदुवेसे दुवेवि दुब्बह्मणे दाणिं एव्व मारेमि ।

(तत् राजपुत्रस्य पुण्यमूर्तेः क्रियमाणद्वेषौ द्वावपि दुर्ब्राह्मणाविदानीमेव मारयामि ।)"

संभ्रमः—

**शङ्कात्रासौ यत्र वाक्ये संभ्रमः कथ्यते यथा ॥ ४६ ॥**

"सौरभः—(सशङ्कं सत्रासं च स्वगतम्) किमेषा पूर्ववदेव कारयिष्यति ?"

आक्षेपः—

**गर्भबीजसमुत्क्षेपादाक्षेपः कथितो यथा ।**

"सौरभः—

प्रसादं तव संप्राप्य साधनीयं समीहितम् ।
विभावरीं विना सेव्या चकोरेण न चन्द्रिका ॥"

गर्भे आवश्यकान्यङ्गानि—

**अभूताहरणं मार्गस्तोटकाधिबले अपि ॥ ४७ ॥**
**आक्षेपश्चात्र नियमाद्वाच्यान्यन्यान्यपीच्छया ।**

अवमर्शसंधिः—

**क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् ॥ ४८ ॥**
**गर्भनिर्भिन्नबीजार्थं सोऽवमर्शोऽवमर्शनात् ।**

अवमर्शसंध्यङ्गानि—

[1]अत्रापवादसंफेटौ विद्रवद्रवशक्तयः ॥ ४९ ॥
द्युतिः प्रसङ्गश्छलनं व्यवसायो विरोधनम् ।
प्ररोचना विचलनमादानं च त्रयोदश ॥ ५० ॥

अपवादः—

दोषप्रख्यापनं यत्स्यादपवादो मतो यथा ।

"कैरवः—

पापे पुरा पातयितुं प्रवृत्ता संतानकं स्वल्पफलाय तर्हि ।
यागैरनेकैर्यमिभिर्वरेण्यो लोकः कथं लोचनगोचरस्ते ॥"

संफेटः—

रोषेण भाषणं यत्स्यात्संफेटोऽभिमतो यथा ॥ ५१ ॥

"मकरदंष्ट्रा—

पत्ता सुधा वारविलासिणीए माआभुअंगेण न मारिदेत्ति ।
सा केदई कामिअफुल्लपुप्फा कत्ता पुरा कंडइणी विसेण ॥
(प्राप्ता सुधा वारविलासिन्या मायाभुजङ्गेन न मारितेति ।
सा केतकी कामितफुल्लपुष्पा क्लप्ता पुरा कण्टकिनी विषेण ॥)
कैरवः—धूर्ते, नाद्यापि रोषं मुञ्चसि ।"

विद्रवः—

वधबन्धादिकथनं विद्रवः कथ्यते यथा ।

[1] तत्र U.

"कैरवः—

बद्धः पश्चाद्बलिभिरवनीपालभृत्यैर्नियोगा-
  द्यस्याः क्रूरैर्यमपरिसरं प्रापणीयो यथासम् ।
सा त्वं रोषं मयि वितनुषे सांप्रतं सांप्रतं ते
  सर्पिः क्षीरं विषमिव खले साधयेत्साधु तेन ॥"

द्रवः—

**द्रवो गुरुतिरस्कारकथनं कथ्यते यथा ॥ ५२ ॥**

"लवः—

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते[1]
  सुन्दस्त्रीदमनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।
यानि त्रीण्यकुतोमुखान्यपि पदान्यासन्खरायोधने
  यद्वा कौशलमिन्द्रसूनुहनने[2] तत्राप्यभिज्ञो जनः ॥"

शक्तिः—

**शक्तिः संकीर्त्यते सा यद्विरोधशमनं यथा ।**

"राजा—वयस्य,

विसृज मनसि रोषं मा विरुद्धं वचो मे
  तव भवतु निजानामेव कोपप्रसादौ
खरतररविरश्मिव्रातपातेऽपि सद्यः
  सरसिजनिकुरुम्बं स्वैरमुन्मेषमेति ॥"

[1] वर्तते इत्यव्ययं दोषसंवरणार्थे इति नारायणीयव्याख्या । तेष्वपि वृद्धेषु संवरणीयो दोषगणो वर्तत एवेति शब्दार्थः ।

[2] निधने U; S.

द्युतिः—

**तर्जनोद्वेजने यत्र सा द्युतिः कीर्त्यते यथा ॥ ५३ ॥**

"कैरवः—

या त्वं दूती यमस्येव तदा तर्जितवत्यपि ।
सैव संप्रति सोद्वेगा चपले चाटु[1] भाषसे ॥"

प्रसङ्गः—

**कीर्तनं गुरुनाम्नो यत्प्रसङ्गः कथ्यते यथा ।**

"मकरदंष्ट्रा—

जादो जलधिझरादो कासारादो विणिक्कन्तं ।
सुमरदि णागो हिअए किं पंकालित्तकासरं जादु[2] ॥

(जातो जलधिझरात् कासाराद्विनिष्क्रान्तम् ।
स्मरति नागो हृदये किं पङ्कालिप्तकासरं जातु ॥)"

छलनम्—

**यत्रावमाननं वाक्ये छलनं तन्मतं यथा ॥ ५४ ॥**

"बन्दी—देव,

कोऽयं ते प्रतिकर्तुमत्र भवतश्चेलान्तबद्धाक्षतो
भूयः स्वस्ति वदन्नटत्यनुगृहं दूर्वार्पणार्ताङ्गुलिः ।
किं कर्नाटमहीपतिः किमु महाराष्ट्रः किमङ्गाधिपः
किं पाण्ड्यः किमु घुर्जरः किममुना सर्वेऽपि ते सेवकाः ॥"

[1] चारु G 3.

[2] उद्गीतिरियम्.

व्यवसायः—

**स्वसामर्थ्यस्य कथनं व्यवसायो मतो यथा ।**

“ कैरवः—

जडं जलनिधेर्वारि मुक्त्वा मुनिनिराकृतम् ।
मम स्वान्ते मधुध्वंसी नित्यं शेते निरामये ॥

अतोऽखिलजगत्स्वहमेवातुलप्रभावः ।”

विरोधनम्—

**विरोधनं स्वशक्त्युक्तिः संरब्धानां मतं यथा ॥ ५५ ॥**

“ अर्जुनः—अर्य, प्रसीद । किमत्र क्रोधेन ?
अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरत्र[1] का व्यथा ॥

भीमः—अरे, भरतकुलेन्दुकलङ्क,

अद्यैव किं न विसृजेयमहं भवन्तं
दुःशासनानुगमनाय बहुप्रलापिन् ।
विघ्नं गुरू न कुरुतो यदि मद्गदाग्र-
निर्भिद्यमानरणितास्थनि ते शरीरे ॥

अन्यच्च रे मूढ,

शोकं स्त्रीवन्नयनसलिलैर्यत्परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविघटने यच्च साक्षीकृतोऽसि ।

[1] स्य का कथा U.

आसीदेतत्तव कुरुपते कारणं जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥

दुर्योधनः—दुरात्मन् भरतकुलापशद, पाण्डवपशो, नाहं भवानिव विकत्थनाप्रगल्भः । किंतु,

द्रक्ष्यन्ति न चिरात्सुप्तं बान्धवास्त्वां रणाजिरे[1] ।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभीमभूषणम् ॥"

प्ररोचना—

**प्ररोचना सिद्धवद्भाव्यर्थकथनं यथा ।**

"बन्दी—देव,

आस्ते द्वारि वधूर्विधातृरचनावैदग्ध्यविश्रान्तिभू[2] -
भूरेतस्य बलादहारि भवता भीतानताराातिना ।
किं नामापरमत्र कार्यमधुना साध्यं समाशास्यते
तत्पाणिग्रहमङ्गलाय मनुजाधीशास्तु यत्नो महान् ॥"

विचलनम्—

**विकत्थनाद्विचलनमामनन्ति बुधा यथा ॥ ५६ ॥**

"कैरवः—

ननु तव नयहीने नापराधं स्मरेयं
मनसि विसृज भीतिं मत्क्रुधो[3] नासि पात्रम् ।
भुवनमखिलमेको भुग्नयैव भ्रुवाहं
नियमयितुमधीशो[4] नीरजाक्षप्रभावात् ॥"

[1] रणाङ्गणे A 2 ; S.
[2] वैदुष्यविश्रान्तिभूः S.
[3] क्रुधां S.
[4] मपीशः S.

आदानम्—

कार्यस्य संग्रहो यत्स्यात्तदादानं मतं यथा ।

"कैरवः—(स्वगतम्) अस्तु नामैनां कुट्टिनीं देवकुलाग्रस्थापितदीपस्तम्भोपरि निधाय गमिष्यामि ।"

अवमर्शे आवश्यकान्यङ्गानि—

व्यवसायादानशक्तित्रयमावश्यकं त्विह ॥ ५७ ॥

निर्वहणसंधिः—

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥ ५८ ॥

निर्वहणसंध्यङ्गानि—

संधिर्विरोधो ग्रथनं निर्णयः परिभाषणम्[1] ।
प्रसादानन्दसमया धृतिर्भाषोपगुम्भने ॥ ५९ ॥
पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ।

संधिः—

मुखसूचितबीजार्थप्राप्तिः संधिर्मता यथा ॥ ६० ॥

"कैरवः—

आदावघटितं कार्यं मध्ये सुघटितं मम ।
भूयो विघटितं भूयो भूयाद्धटयितुं प्रभुः ॥"

विरोधः—

मार्गणं तस्य कार्यस्य विरोधः कथ्यते यथा ।

[1] परिभावनम् S.

"सौरभः—

सा त्वयैवमवमानिता सती कुट्टिनी कुपितपन्नगीनिभा ।
मारयेत्किमु महीशदर्शिता[1] मानयेत्किमुत मन्दविग्रहा ॥"

ग्रथनम्—

**ग्रथनं तस्य कार्यस्य तूपक्षेपो मतो यथा ॥ ६१ ॥**

"कैरवः—वयस्य, नात्र संदेहः ।

शान्तिमेति सकलोऽपि भूभुजां संनिधौ सहजवैरवर्जितः ।
तामसा अपि तरक्षवो मृगैः संचरन्ति हि समं तपोवने ॥"

निर्णयः—

**अनुभूतार्थकथनं निर्णयोऽभिमतो[2] यथा ।**

"सौरभः—वयस्य, मैवं मन्तव्यम् ।

स देवतावेश्मनि सत्यसंगरः सतां समक्षं समुदीरितं तथा ।
वचः स्वकीयं वसुधेश्वरः कथं मुहूर्तमात्रेण मृषा करिष्यति ॥"

परिभाषणम्—

**अन्योन्यपरिवादो[3] यः परिभाषात्र सा यथा ॥ ६२ ॥**

"मकरदंष्ट्रा—(सरोषम्) अले दुब्बह्मण, पहववेदिणो पुरदो पुणो वि एव्वं भणसि ।

(अरे दुर्ब्राह्मण, प्रभववेदिनः पुरतः पुनरप्येवं भणसि ।)

[1] तर्जिता S. [2] अभिहितो यथा S. [3] परिभावो S.

सौरभः—

धूर्ते दुरन्तविपदर्णवमध्यमग्नौ

दीनाववेक्ष्य कृपया दिननाथवंश्यः ।

[1]आवामपारमनयन्नयनात्तदीया-

ज्ज्ञातौ जहाति न कदापि सुतौ नरेन्द्रः ॥

अतस्ते तर्जनान्न बिभीवः ।"

प्रसादः—

**प्रसीदेत्याद्यनुनयः प्रसादोऽभिमतो यथा ।**

"[2]रुतसारः—(किंचिद्विहस्य) भो, क्षमस्व ममापराधम् ।"

आनन्दः—

**वाञ्छितार्थस्य या प्राप्तिरानन्दः स मतो यथा ॥ ६३ ॥**

"पुरोधाः—राज्ञः करेण रमण्याः करं ग्राहयति ।

राजा—(सहर्षं गृह्णाति)"

समयः—

**चिरारूढस्य दुःखस्य निर्गमः समयो यथा ।**

"राजा—([3]कथमपि कटाक्षेण निर्वर्ण्य अपवार्य) वयस्य,

सामिफुल्लसरसीरुहनिर्यद्भृङ्गसंततिसमाननिकायाः ।

अञ्जनाविलबाष्पलवा मे क्षालयन्ति चिरखेदममुष्याः ॥"

[1] आवामवारं S.

[2] मतसारः S.

[3] तरुणीं Added before. S.

धृतिः—

**स्थिरीकरणमर्थस्य लब्धस्य तु धृतिर्यथा ॥ ६४ ॥**

"पुरोधाः—ततः सप्तपदान्याक्रम्य,

कलितानि पदानि सप्त साक्षीण्यनले वामुभयोरतोऽस्तु सख्यम् ।
शिवयोरिव शाश्वतैकरस्यं चरतो यावदशीतशीतभानू ॥"

भाषणम्—

**मानार्थकामादिलाभो भाषणं कथितं यथा ।**

"कैरवः—

तवात्मजा तामरसायताक्षी मह्यं ससंमानमियं महीश ।
दत्ता दयावारिधिना त्वया तद्गुरूपदेशादुरु यत्सदुक्तम् ॥"

उपगुम्भनम्—

**उपगुम्भनमाश्चर्यप्राप्तिरित्युच्यते यथा ॥ ६५ ॥**

"पुरोधाः—(साश्चर्यम्) मनोरथसिद्ध, ममाप्येतदेव विवक्षितम् । अहो, दैवादावयोर्मतिसंवादः ।"

पूर्वभावः—

**कार्यस्य दर्शनं पूर्वभावः संकीर्त्यते यथा ।**

"मनोरथसिद्धः—अन्यच्चेदं ममाशास्यमस्ति । तदिदम्—तथा मालवनाथः संभावनीयो यथा प्रीयते देवी ।

सर्वः स्वजनसंमानात्संतोषमुपयाति हि ।
यथा वकुलसेकेन विकसेन्मुकुलावली ॥"

उपसंहारः—

**स स्यात्कार्यस्य संहारः प्रियावाप्तिर्मतो यथा ॥ ६६ ॥**

"पुरोधाः—

पुण्यैस्तस्य पुरातनैः क्षितिपतेः प्रख्यातवत्सान्वय-
क्षीराम्भोनिधिचन्द्रमाः सकलभूलोकाभिनन्द्योदयः ।
स्वैरं खर्वितपूर्वराजचरितः पूतैर्निजैर्वर्तनै-
र्जामातासि जनाधिनाथ विदिशां हंसावलीं चाप्नुयाः ॥"

प्रशस्तिः—

**प्रशस्तिः प्रोच्यते सा तु यच्छुभाशंसनं यथा ।**

"साहित्यभानुरयतामुदयं नृपाणां
कीर्त्यम्बुजानि विकसन्ति सितानि सन्तु ।
नाशं प्रयातु घनदुर्जनवाक्तमिस्रं
भूरस्तु संततमहोत्सवशालिनीयम् ॥"

निर्वहणे आवश्यकान्यङ्गानि—

**अङ्गान्यवश्यमेतानि वाच्यानीह चतुर्दश ॥ ६७ ॥**

संध्यङ्गानां प्रयोजनम्—

**उक्ताङ्गानां चतुःषष्टेः षोढा चैषां प्रयोजनम् ।**
**इष्टस्यार्थस्य रचना गोप्यगुप्तिः प्रकाशनम् ॥ ६८ ॥**
**रागः प्रयोगस्याश्चार्यं वृत्तान्तस्यानुपक्षयः ।**

वस्तुनस्त्रैविध्यम्—

**पुनस्त्रेधा विभागः स्यात्सर्वस्याप्युक्तवस्तुनः ॥ ६९ ॥**
**सूच्यमेव भवेत्किंचिद् दृश्यं श्रव्यमथापरम् ।**

सूच्यम्—

नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः ॥ ७० ॥

सूच्यार्थाविष्करणम्—

अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ॥ ७१ ॥

विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ।

विष्कम्भः—

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ॥ ७२ ॥

संक्षिप्तार्थस्तु[1] विष्कम्भो मध्याभ्यां मध्यमेन वा ।

विष्कम्भो द्विधा—

प्रयोजितो भवेच्छुद्धः संकीर्णो नीचमध्यमैः ॥ ७३ ॥

चूलिका—

अन्तर्यवनिकासंस्थैश्चूलिकार्थस्य सूचना ।

अङ्कास्यम्—

अङ्कान्तपात्रैरङ्कास्यमुत्तराङ्कार्थसूचनम् ॥ ७४ ॥

अङ्कावतारः—

अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः ।

भूतभाविकथांशानां सूचको नीचभाषया ॥ ७५ ॥

प्रवेशकः—

नीचपात्रैः प्रयुक्तोऽङ्कद्वयस्यान्तः प्रवेशकः ।

एभिः संसूचयेत्सूच्यं दृश्यमङ्कैः प्रदर्शयेत् ॥ ७६ ॥

दृश्यम्—

दृश्यस्तु मधुरोदात्तरसभावनिरन्तरः ।

[1] संक्षेपार्थस्तु S.

श्रव्यम्—

नाट्यधर्ममवेक्ष्यैव श्रव्यं वस्तु त्रिधा यथा[1] ।

श्रव्यस्य त्रैविध्यम्—

सर्वश्राव्यं च नियतश्राव्यमश्राव्यमेव च ॥ ७७ ॥

प्रकाशम्; स्वगतम्—

सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ।
द्विविधं नियतश्राव्यं जनान्तमपवारितम् ॥ ७८ ॥

जनान्तिकम्—

त्रिपताकाकरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यमन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम् ॥ ७९ ॥

अपवारितम्—

रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितम् ।

आकाभाषितम्—

किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येतत्तत्स्यादाकाशभाषितम् ॥ ८० ॥
सर्वाङ्गसंयुतमनेकविधार्थसार्थं
सद्वृत्तनायकविशेषसमग्रशोभम् ।
राज्यं त्वदीयमिव रूपकवस्तु रम्यं
[2]मन्नक्षितीश महतां मुदमातनोति ॥ ८१ ॥

इति श्रीमदमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे[3]
संध्यङ्गनिरूपणं नाम सप्तमः परिच्छेदः।

---

[1] मतम् S. [2] मन्म S. [3] सर्वालंकारसंग्रहे U.

# अष्टमः परिच्छेदः

वृत्तिः—

नेतृव्यापाररूपा या वृत्तिः सा स्याच्चतुर्विधा ।

वृत्तिभेदाः—

भारती सात्त्वती चारभटी कैशिक्यतः परम् ॥ १ ॥
चतस्रो वृत्तयो ज्ञेयाः सर्वनाट्यस्य मातृकाः ।

भारती वृत्तिः—

भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः ॥ २ ॥
भरतैस्तु प्रयोज्यत्वाद्भारती चतुरङ्गिका ।

भारतीवृत्त्यङ्गानि—

प्ररोचनामुखं चैव वीथी[1] प्रहसनं तथा ॥ ३ ॥
स्थाने प्रहसनस्याथ भाणमप्याह कोहलः ।
एतेषां लक्षणं [2]पश्चात्प्रसङ्गादभिधीयते ॥ ४ ॥

सात्त्वती वृत्तिः—

[3]सात्त्वती सा मता सत्त्वशौर्यत्यागदयार्जवैः ।
युक्ता हर्षोत्तरा शोकवर्जिता समुदीरिता ॥ ५ ॥

[1] वीथ्या G 3.
[2] पश्चात्प्रसङ्गेना G 3.
[3] सात्त्वती नाम सा नेतृशौर्यत्यागदयार्जवैः G 3.

सात्त्वतीवृत्त्यङ्गानि—

**संलापोत्थापकावस्याः संघश्च परिवर्तकः ।**
**अङ्गानि चत्वार्येतेषां क्रमाल्लक्षणमुच्यते ॥ ६ ॥**

संलापकः—

**संलापको [1]गभीरोक्तिर्नानाभावरसो यथा ।**

"रामः—अयं सः, यः किल सपरिवारकार्तिकेयविजयावर्जितेन भगवता नीललोहितेन [2]परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः ।

परशुरामः—आम् । राम दाशरथे, स एवायं ममाचार्यपादानां प्रियः परशुः ।

अस्त्रप्रयोगखुरलीकलहे गणानां
सैन्यैर्वृतो विजित एव मया कुमारः ।
एतावतापि परिरभ्य कृतप्रसादः
प्रादादमुं प्रियगुणो भगवान्गुरुर्मे ॥"

उत्थापकः—

**उत्थापकस्तु यत्रारिं युद्धायोत्थापयेद्यथा ॥ ७ ॥**

"आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यं तु कुतोऽद्य संप्रति मम त्वद्दर्शने चक्षुषः ।
त्वत्सांगत्यसुखस्य नास्ति विषयः किं वा बहुव्याहृतै-
रस्मिन्विस्मृतजामदग्न्यविजये बाहौ धनुर्जृम्भताम् ।"

संघः—

**नीत्या दैवेन वा भेदः संघाख्यः कथ्यते यथा ।**

[1] गर्भितोक्तिः G 3. [2] परि omitted G 3.

" चाणक्यो नीतिसामर्थ्याद्राक्षसीयानभेदयत् ।
भेदो विभीषणस्याभूद्रावणाद्दैवयोगतः ॥ "

परिवर्तकः—

**भेदं साम च दानं च निष्फलीकृत्य यत्र तु ॥ ८ ॥**
**परिवर्तक इत्युक्तो दण्डस्वीकरणं यथा ।**

" हेरम्बदन्तमुसलोल्लिखितैकभित्ति
वक्षो विशाखविशिखव्रणलाञ्छितं मे ।
रोमाञ्चकञ्चुकितमद्भुतवीरलाभा-
द्यत्सत्यमद्य परिरब्धुमिवेच्छति त्वाम् ॥

रामः—भगवन्, परिरम्भणमिति प्रस्तुतप्रतीपमेतत् । "

आरभटी वृत्तिः—

**मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्त्यादिचेष्टितैः ॥ ९ ॥**
**युक्ता भवेदारभटी चत्वार्यङ्गानि तत्र च ।**

आरभटीवृत्त्यङ्गानि—

**संक्षिप्तिका स्यात्संफेटो वस्तूत्थानावपातने ॥ १० ॥**

संक्षिप्तिः—

**संक्षिप्तवस्तुरचना संक्षिप्तिः [1]शिल्पतो यथा ।**
**चरिते वत्सराजस्य कलिङ्गद्विपयोजना[2] ॥ ११ ॥**
**संक्षिप्तिरथवा नेतृदशान्तरकृतिर्यथा ।**
**वालिनाशेन सुग्रीवः किष्किन्धाधिपतिः कृतः ॥ १२ ॥**
**भार्गवस्यापि चौद्धत्यनिवृत्तौ शान्तताश्रयः ।**

1 शिल्पिनः G 3 ; S. 2 योजनम् G 3 ; S.

संफेटः—

संफेटस्तु समाघातः क्रुद्धसंरब्धयोर्यथा ॥ १३ ॥
लक्ष्मणेन्द्रजितोर्युद्धं रामरावणयोश्च वा[1] ।

वस्तूत्थापनम्—

मायाद्युत्थापितं वस्तु वस्तूत्थापनकं यथा ॥ १४ ॥
माययेन्द्रजितो[2] युद्धे दिवा [3]ध्वान्तप्रदर्शनम् ।

अवपातनम्—

[4]क्षिप्रप्रवेशनिर्याणसंभ्रमत्रासविद्रवैः ॥ १५ ॥
अवपातस्त्वसौ ज्ञेयोऽनिष्टदर्शनतो यथा ।

"नष्टं [5]वर्षवरैर्मनुष्यगणनाभावादकृत्वा[6] त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥"

कैशिकी वृत्तिः—

या रम्यनेपथ्यविशेषयुक्ता
स्त्रीभिर्युता वा बहुनृत्तगीता[7] ।
कामोपभोगप्रचुरप्रचारा
सा कैशिकी वृत्तिरुदाहृता स्यात् ॥ १६ ॥

[1] यत G 3.
[2] जिता S.
[3] चन्द्र G 3; S.
[4] क्षिप्रप्रवेशनिर्वाण G 3.
[5] वर्षधरैः S.
[6] नाशादकृत्वा G 3; S.
[7] बहुगीतनृत्यैः G 3; S.

"विसृज सुन्दरि संगमसाध्वसं ननु चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥"

नर्मस्फोटः—

**कन्यानायकयोर्यत्र वृत्तं च स्फुटितं भवेत् ।**
**नर्मस्फोटः स विज्ञेयः संभ्रमादियुतो यथा ॥ २० ॥**

"गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथवा ।
भ्रमति भुवने कंदर्पास्त्रं[1] विकारि च यौवनं
[2]ललितललितास्ते ते भावाः क्षिपन्ति च धीरताम् ॥"

नर्मगर्भः—

**नर्मगर्भश्छन्ननेतृव्यलीकार्थाय तद्यथा ।**

"दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
तिर्यग्वक्रितकंधरः [3]सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥"

भारती वृत्तिः—

**भारती शब्दवृत्तिः स्यादस्यास्तिस्रोऽर्थवृत्तयः ॥ २१ ॥**

रसभेदेन वृत्तयः—

**शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः ।**
**रसे रौद्रे सबीभत्से वृत्तिः सर्वत्र भारती ॥ २२ ॥**
**आसां भेदचतुष्केऽस्मिन्नेकैकमपि वाञ्छितम् ।**

[1] कंदर्पाज्ञा G 3; S. [2] प्रकृतिमधुराः G 3. [3] सपुलकं G 3; S.

प्रयोगे कविभिः कार्यं सर्वमेकत्र दुर्लभम् ॥ २३ ॥

पात्राणां भाषानियमः—

पाठ्यं तु संस्कृतं नृणामनीचानां कृतात्मनाम् ।
लिङ्गिनीनां महादेव्या मन्त्रिजावेश्ययोः क्वचित् ॥ २४ ॥
स्त्रीणां तु प्राकृतं [1]प्रायः शौरसेन्यधमेषु च[2] ।
पिशाचात्यन्तनीचादौ पैशाचं मागधं तथा ॥ २५ ॥
यद्देश्यं नीचपात्रं स्यात्तद्देश्यं तस्य भाषितम् ।

पात्राणां संबोधनक्रमः—

भगवन्तोऽवरैर्वाच्या विद्वद्देवर्षिलिङ्गिनः ॥ २६ ॥
विप्रामात्याग्रजाश्चार्या नटीसूत्रभृतौ[3] मिथः ।
रथी सूतेन चायुष्मान् पूज्यैः [4]शिष्यात्मजानुजाः ॥ २७ ॥
वत्सेति तातः पूज्योऽपि सुगृहीताभिधश्च तैः ।
भावो नटेन सूत्री च मारिषस्तेन सोऽपि च ॥ २८ ॥
देवः स्वामीति नृपतिर्भृत्यैर्भट्टेति चाधमैः ।
आमन्त्रणीयाः पतिवज्ज्येष्ठामध्याधमैः स्त्रियः ॥ २९ ॥
समा हलेति च प्रेष्या हञ्जे वेश्याज्जुकेति च ।
कुट्टिन्यत्तेत्यनुगतैः पूज्या वा जरती जनैः ॥ ३० ॥
विदूषकेण भवती राज्ञी चेति च शब्द्यते ।
[5]हण्डे नीचा पुरस्कार्या लालिता तु यवयसी ॥ ३१ ॥

[1] प्राहुः G 3; S.
[2] न्यादयोऽपि च S.
[3] कृतौ G 3; S.
[4] शिष्यात्मजा अपि G 3; S.
[5] एतदारभ्य वासूरितीर्यते (३४) इति पर्यन्तम् A 3 कोशे न दृश्यते।

भगिनीपतिरावुत्तो राजा भट्टारको जनैः ।
युवराजः कुमारः स्याद्भर्तृदारक इत्यपि ॥ ३२ ॥
राजपुत्री तु तद्वत्स्यादार्यपुत्रः पतिः स्त्रिया ।
प्रियेति भर्त्रा राज्ञी स्यात्स्यालो राष्ट्रिय उच्यते ॥ ३३ ॥
देवी कृताभिषेकायामितरासु तु भट्टिनी ।
अत्तिका भगिनी ज्येष्ठा बाला वासूरितीर्यते ॥ ३४ ॥
सद्वृत्तिशालि सरसं नाट्यं नियतभाषितम् ।
त्वच्चरित्रमिवाभाति सहितं [1]मन्नभूपते ॥ ३५ ॥

इति श्रीमदमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे[2]
वृत्तिनिरूपणं नामाष्टमः परिच्छेदः ।

---

[1] मन्म S. [2] सर्वालंकारसंग्रहे U.

# नवमः परिच्छेदः

रूपकाणि—

नाटकं [1]सप्रकरणं भाणः प्रहसनं डिमः ।
[2]व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥ १ ॥
प्रधानरूपकाण्याहुर्दशैतानि विपश्चितः ।

उपरूपकाणि—

नाटिका सट्टकं त्रोटो प्रेक्षणं गोष्ठिभाणिके ॥ २ ॥
संलापकश्च प्रस्थानं काव्यं हल्लीसरासके ।
श्रीगदितं च लासिका दुर्मल्ली नाट्यरासकम् ॥ ३ ॥
उल्लाप्यमुपरूपाणि भवन्त्येतानि षोडश ।

नाटकम्—

प्रकृतित्वादथान्येषां[3] भूयो रसपरिग्रहात् ॥ ४ ॥
संपूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते ।

रङ्गनेपथ्ये—

रङ्गः सदस्यास्थानोर्वी नेपथ्यं नटवर्गभूः ॥ ५ ॥

[1] च प्रकरणं U.

[2] वीथीसमवकाराङ्कव्यायोगेहामृगा इति U; G 3.

[3] तथान्येषां U 4.

पूर्वरङ्गः—

यन्नाट्यवस्तुनः पूर्वं [1]रङ्गे विघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः [2]स कीर्तितः ॥ ६ ॥

पूर्वरङ्गाङ्गानि—

[3]प्रत्याहारोऽवतरणमारम्भाश्रावणे अपि ।
वक्त्रपाणिः परीघट्टना या संघोटना तथा ॥ ७ ॥
मार्गासारितकं शुद्धावकृष्टोत्थापने तथा ।
परिवर्तनकं नान्दी तथा चैव प्ररोचना ॥ ८ ॥
त्रिगतं चासारितकं तथा गीतिविधिर्ध्रुवा ।
त्रिसामकमतो रङ्गद्वारं स्याद्वर्धमानकम् ॥ ९ ॥
चारिर्महाचारिरिति पूर्वरङ्गाङ्गसंहतिः ।

नान्दी—

यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ॥ १० ॥
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ।
आशीर्वचनसंयुक्ता यस्मान्नित्यं भवेदिह ॥ ११ ॥
देवद्विजनृपादीनां तस्मान्नान्दीति शब्दिता ।
नान्दी गुणनिका वाद्यमानद्धादित्रयोत्थितम् ॥ १२ ॥
नन्दीशः पूज्यते पुष्पैस्तेन नान्दीति सोच्यते ।
या काचित्पठ्यते सूक्तिर्या कांचिद्देवतां प्रति[4] ॥ १३ ॥
सूत्रधारेण नाट्यादौ सा नान्दी नन्दिनो मुदे ।

[1] रङ्गविघ्नोप U; G 3. [2] प्र U.

[3] प्रत्याहारादीनां लक्षणं नाट्यशास्त्रे पञ्चमाध्याये प्रपञ्चितम् । स च भागोऽत्रानुबन्धरूपेणान्ते संयोजितः ।

[4] यया नाट्ये सरस्वती A 3.

नान्द्यां पदनियमादिः—

**मङ्गल्यशङ्खचक्राब्जकोककैरवशंसिनी ॥ १४ ॥**

**नान्दी पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृता ।**

**द्वाविंशत्याष्टादशैर्वापि पदादिनियमो न वा ॥ १५ ॥**

**[1]नाट्याङ्गं संविधायेत्थं सूत्रधारे विनिर्गते ।**

**प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥ १६ ॥**

**दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।**

**[2]सूचयेद्वस्तुबीजाद्यैर्मुखं पात्रक्रमाद्यथा ॥ १७ ॥**

"रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम् ।
तौ सुग्रीवविभीषणावनुगतौ नीतौ परां संपदं
प्रोद्वृत्ता दशकंधरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥"

"यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥"

"आसारितप्रकटनिर्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तः ।
उत्खाय गाढतमसं घनकालमुग्रं[3] रामो दशास्यमिव संभृतबन्धुजीवः ॥"

"तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥"

**[4]अनिष्ठुरैश्च मधुरैः श्लोकैर्वाक्यार्थसूचकैः ।**

**ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ १८ ॥**

[1] पूर्वरङ्गं विधायेत्थं U; G 3.
[2] सूचयेद्वस्तुबीजं वा U; G 3.
[3] घनमण्डलाग्रं A 3.
[4] रङ्गं प्रसाद्य मधुरैः U; G 3.

प्ररोचना—

**प्ररोचना प्रशंसातस्तून्मुखीकरणं यथा ।**

"श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥"

आमुखम्—

**सूत्रधारो नटीं ब्रूते [1]मारिषं वा विदूषकम् ॥ १९ ॥**
**स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ।**

आमुखाङ्गानि—

**प्रस्तावनेति वा तत्र कथोद्घातः प्रवृत्तकम् ॥ २० ॥**
**प्रयोगातिशयश्चाथ वीथ्यङ्गानि त्रयोदश ।**

कथोद्घातः—

**स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ॥ २१ ॥**
**गृहीत्वा प्रविशेत्पात्रं कथोद्घातो द्विधा यथा ।**

"द्वीपादन्यस्मादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥"

"लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥"

[1] मार्षं वाथ A 3.

प्रवृत्तकम्—

**कालसाम्यात्प्रवेशो यः प्रवृत्तकमिदं यथा ॥ २२ ॥**

"प्रौढपयोधरभारा प्रावृण्मलिनाम्बरा प्रबाष्पधरा ।
मानसगराजहंसा मानवतीवाद्य मदनार्ता ॥"

प्रयोगातिशयः—

**एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः ।**
**[1]पात्रप्रवेशो यत्रैव प्रयोगातिशयो यथा ॥ २३ ॥**

"सौरभेण सहकारपादपः पञ्चतो हरति षट्पदावलिम् ।
रामणीयकगुणेन रागिणीं कौमुदीदृशमिवैष कैरवः ॥"

"वर्णयितुमस्य महिमा वसन्तसमयस्य शक्यते केन ।
यदयं विप्रो वृद्धोऽप्युज्झति दामोदरो निजां प्रकृतिम् ॥"

वीथ्यङ्गानि—

**वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्तेऽत्रैव तानि तु ।**
**उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम् ॥ २४ ॥**
**वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।**
**असत्प्रलापव्याहारमृदवानि त्रयोदश ॥ २५ ॥**
**[2]वीथीप्रसङ्गे वीथ्यङ्गलक्षणं [3]तत्र वक्ष्यते ।**
**एषामन्यतमेनार्थं पात्रं वाक्षिप्य सूत्रभृत् ॥ २६ ॥**
**प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत् ।**

[1] पात्रप्रयोगो यत्रैव U ; G 3.
[2] आदौ प्रसङ्गात् A 3 ; U.
[3] तस्य A 3.

सर्वनाट्यसाधारणाङ्गानि—

पूर्वरङ्गः सभापूजा कवेर्गोत्रादिकीर्तनम्[1] ॥ २७ ॥
नाटकादेस्तथा संज्ञा सूत्रधारोऽप्यथामुखम् ।
अर्थोपक्षेपकाः पञ्च चतस्रो वृत्तयोऽपि च ॥ २८ ॥
नाट्योक्तिश्च [2]समावेशस्तथा भाषाविभाषयोः ।
प्रायशः सर्वनाट्येषु कीर्त्यन्ते संगता इमे ॥ २९ ॥

नाटकादीनां संज्ञाकरणे नियमः—

संज्ञा तु नाटकादीनां नायकेनेतरेण वा ।
नायिकानायकाख्यानात्संज्ञा प्रकरणादिषु ॥ ३० ॥
नाटिकासट्टकादीनां नायिकाभिर्विशेषणम् ।

आधिकारिकेतिवृत्तम्—

अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान् ॥ ३१ ॥
कीर्तिकामो महोत्साहस्त्रय्यास्त्राता महीपतिः ।
प्रख्यातवंशो राजन्यो दिव्यो वा यत्र नायकः ॥ ३२ ॥
तत्प्रख्यातं विधातव्यं वृत्तमत्राधिकारिकम् ।
यत्तत्रानुगतं किंचिन्नायकस्य रसस्य वा ॥ ३३ ॥
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ।
यथा वालिवधस्त्यक्तश्छद्मनोदात्तराघवे ॥ ३४ ॥
कल्पितो वीरचरिते वधस्तस्यैव चान्यथा ।

नाटके संधिनियमः—

आद्यन्तमेवं निश्चित्य पञ्चधा तद्विभज्य च ॥ ३५ ॥

[1] वर्णनम् S. [2] समादेशः A 3.

खण्डशः संधिसंज्ञांस्तान् भागानपि च खण्डयेत् ।
द्वित्रिद्वित्रिचतुर्युक्तदशसंख्यान्यनुक्रमात् ॥ ३६ ॥
चतुःषष्टिश्च तानि स्युरङ्गानि त्विह संधिषु ।

नाटके विष्कम्भः—

आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः ॥ ३७ ॥
अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् ।
यदा संदर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा ॥ ३८ ॥
यदा तु सरसं वस्तु मूलादेव प्रवर्तते ।
आदावेव तदा कुर्यादामुखाक्षेपसंश्रयम्[1] ॥ ३९ ॥

अङ्कलक्षणम्—

प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः[2] ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ ४० ॥

नाटके रसः—

अनुभावविभावाभ्यां स्थायिनो व्यभिचारिभिः ।
गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम् ॥ ४१ ॥
न चातिरसतो वस्तु [3]दूरविच्छिन्नतां नयेत् ।
रसं वा न तिरोदध्याद्वस्त्वलंकारलक्षणैः ॥ ४२ ॥
एको रसोऽङ्गी कर्तव्यो वीरः शृङ्गार एव वा ।
अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम् ॥ ४३ ॥

[1] आमुखापेक्षसंश्रयः, A.
[2] व्यक्तिसमन्वितः, G 3; S.
[3] दूरे, S.

नाटके प्रत्यक्षतोऽदर्शनीयानि—

दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ।
संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ॥ ४४ ॥
अम्बरग्रहणादीनि प्रत्यक्षाणि न दर्शयेत्[1] ।
नाधिकारिवधं क्वापि त्याज्यमावश्यकं न च[2] ॥ ४५ ॥
एकाहचरितैकार्थं कुर्याच्चासन्ननायकम् ।
पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ॥ ४६ ॥
एवमङ्काः प्रकर्तव्याः प्रवेशादिपुरस्कृताः ।

नाटके अङ्कसंख्या—

पञ्चाङ्कं च षडङ्कं च सप्ताङ्कं च तथापरम् ॥ ४७ ॥
अष्टाङ्कं च नवाङ्कं च दशाङ्कं नाटकं विदुः ।
मारीचवचनं नाम पञ्चाङ्कं परिकीर्तितम् ॥ ४८ ॥
वेणीसंहारसंज्ञं तु षडङ्कं नाटकं मतम् ।
शाकुन्तलं तु सप्ताङ्कमष्टाङ्कं नलवीजयः[3] ॥ ४९ ॥
देवीपरिणयाख्यानं नवाङ्कं परिकीर्तितम् ।
बालरामायणं नाम दशाङ्कं नाटकं मतम् ॥ ५० ॥

प्रकरणम्—

प्रकरणे इतिवृत्तम्—

अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम् ।

प्रकरणे नायकः—

अमात्यविप्रवणिजामेकं कुर्याच्च नायकम् ॥ ५१ ॥

[1] निर्दिशेत्, S. [2] क्वचित्, U ; G 3. [3] 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घः

धीरप्रशान्तं सापायं[1] धर्मकामार्थतत्परम् ।

प्रकरणे नायिका—

नायिकां तद्विधां नेतुः कुर्यात् स्त्रीं गणिकां तथा ॥ ५२ ॥
क्वचिदेकैव कुलजा वेश्या क्वापि द्वयं क्वचित् ।

प्रकरणस्य त्रैविध्यम्—

आभिः प्रकरणं त्रेधा शुद्धं स्यात्कुलजान्वितम् ॥ ५३ ॥
संकीर्णं वेश्यया युक्तं मिश्रं तद्द्वयसंकरात्[2] ।

प्रकरणे संध्यादि—

शेषं नाटकवत् [3]संधिप्रवेशकरसादिकम् ॥ ५४ ॥

भाणः—

भाणस्तु धूर्तचरितं स्वानुभूतं परेण वा ।

भाणे नायकः—

यत्रोपवर्णयेदेको निपुणः पण्डितो विटः ॥ ५५ ॥
संबोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः ।

भाणे रसः—

सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यसंस्तवैः ॥ ५६ ॥

भाणे वृत्त्यङ्गवस्तूनि—

भूयसा भारती वृत्तिरेकाङ्कं वस्तु कल्पितम् ।

[1] सोपायं, S; A 2.  [2] संगतम्, G 3; U; S.  [3] सर्वं S.

भाणे संधयः—

**मुखनिर्वहणे साङ्गे लास्याङ्गानि दशापि च ॥ ५७ ॥**

लास्याङ्गानि—

**गेयपदं स्थितपाठ्यमासीनं पुष्पगन्धिका ।**
**प्रच्छेदकस्त्रिमूढं च सैन्धवाख्यं द्विमूढकम् ॥ ५८ ॥**
**उत्तमोत्तमकं चान्यदुक्तप्रत्युक्तमेव च ।**
**लास्ये दशविधं ह्येतदङ्गनिर्देशकल्पनम् ॥ ५९ ॥**

गेयपदम्—

**सुखासीनाः श्रुतिसुखं यत्र गायन्ति गायकाः ।**
**ततादिवाद्यमिश्रं तच्छुष्कं गेयपदं यथा ॥ ६० ॥**

"सुखासीनाः सन्तः सुरभिकुसुमामोदसुभगे
तले सान्द्रच्छाये तरुणसहकारस्य शिशिरे ।
कलैर्वीणावाद्यैः[1] सममृदुलसंदिग्धवचसो
रसावेशोल्लासान्मधुरमिह[2] गायन्ति मदनम्[3] ॥"

स्थितपाठ्यम्—

**पठेद्यत्रासनासीना प्राकृतं विरहातुरा ।**
**अङ्गनानङ्गतप्ताङ्गी स्थितपाठ्यं मतं यथा ॥ ६१ ॥**

"रत्तिए हित्थहिअओ महुअर मोत्तूण पदुमिणीमण्णत्तो ।
गच्छसि गच्छ पुणो सा पेच्छदि णाण्णं णिमीलिदंबुरुहच्छी ॥
(रात्र्या त्रस्तहृदयो मधुकर मुक्त्वा पद्मिनीमन्यत्र ।
गच्छसि गच्छ पुनः सा पश्यति नान्यं निमीलिताम्बुरुहाक्षी ॥)"

[1] क्वाणैः, U; G 3. [2] मदनमिह, U; G 3. [3] मधुरम् U; G 3.

आसीनम्—

शोकचिन्तापरवशं वाद्याभिनयवर्जितम् ।
आस्यते यत्र कामिन्या तदासीनं मतं यथा ॥ ६२ ॥

"बाले मालतिके,

म्लानं ते वदनं [1]मदो विगलितो मन्दो विलासक्रम-
श्चिन्ताशोकवशं चिरोज्झितसुखं चित्तं वपुर्धूसरम् ।
निःशब्दाभिनयं निविश्य[2] विजने त्वं चेष्टसे नो यथा
प्रालेयप्रकरेण पीडितपरिक्लिष्टाम्बुजा पद्मिनी ॥"

पुष्पगन्धिका—

नर्तक्याः पुरुषस्येव प्रगल्भं चेष्टितं यदा ।
नैकभेदं च संगीतं सा ज्ञेया पुष्पगन्धिका ॥ ६३ ॥

"ग्रीवाविभूषणविषक्तदुकूलकोणसंछन्नपीवरपयोधरभारनम्रा ।
मैरेयमत्तमहिलाकरदत्ततालमातन्वती समदनर्तनमाविरास्ते ॥

सखि शारदिके, पुंवत्प्रगल्भा विविधगानमुखरविलासिनीमण्डलीमध्यगता निस्त्रपं नृत्यसि ।"

प्रच्छेदकः—

स हि प्रच्छेदको यत्र ज्योत्स्नासंपातविक्लवाः ।
कामिन्यो यान्त्यपव्रीडाः सागसोऽपि प्रियान्यथा ॥ ६४ ॥

"[3]प्रशिथिलनिजलज्जाः प्राङ्मुखं वीक्षमाणा-
[4]स्तिमिरविरतिभीतास्तूर्णमुत्तीर्णमार्गाः ।

[1] मनो विगलितम्, S; A 2. [2] निवेश्य, S. [3] प्रचलित S; A 2.
[4] तिमिरविगमभीतास्तीर्णमार्गाश्च तूर्णम् S.

वलयचलनलोला वञ्चितात्मीयलोकाः
सततमभिसरेयुः सागसोऽप्यात्मनाथान्[1] ॥"

त्रिमूढम्—

**पुंभावप्रचुरं नाट्यं समवृत्तपरिष्कृतम् ।**
**मृदुश्लक्ष्णपदं यत्र तत् त्रिमूढं स्मृतं यथा ॥ ६५ ॥**

"अस्याः खलु,

अभिनयशस्तौ हस्तौ पादौ परिभूतकिसलयौ सलयौ ।
अङ्गं [2]चित्तजरङ्गं नृत्तं पुंभावशालि समवृत्तम् ॥"

सैन्धवम्—

**न नाट्ये लक्ष्यते पाठ्यं[3] पात्रं संकेतवर्जितम् ।**
**जायते सैन्धवी भाषा यत्र तत्सैन्धवं यथा ॥ ६६ ॥**

" नाट्यमलक्षितपाठ्यं[4] पात्रं संकेतवर्जितं यत्र ।
सैन्धवभाषाचतुरैर्विहितं वैदेशिकैर्नटैर्वीथ्याम् ॥"

द्विमूढम्—

**रसभावाः परिक्लिष्टाश्चतुरश्रः परिश्रमः ।**
**मुखप्रतिमुखे चित्रे तद् द्विमूढं मतं यथा ॥ ६७ ॥**

" [5]अत एव खल्वस्याः—

रसभावाः परिक्लिष्टाः प्रौढो विद्यापरिश्रमः ।
चित्रे मुखप्रतिमुखे सलयः पादयोः क्रमः ॥"

[1] पि स्वनाथान्, S. [2] रञ्जितरङ्गं, U ; G 3 ; S. [3] वाद्यं, U ; G 3.
[4] वाद्यं, U ; G 3. [5] तत एव U ; G 3.

उत्तमोत्तमकम्—

विचित्रश्लोकसंदर्भो यत्र नानाविधो रसः ।
हेला भावश्च ललितश्चोत्तमोत्तमकं यथा ॥ ६८ ॥

" [1]केयमपटीक्षेपेण प्रविशति ?

अङ्कूरत्कुचमप्यनल्पविलसत्तत्संनिवेशक्रमं
वक्षोऽस्या वलिरेखिकाभिरुदरं वामभ्रुवो वास्यते ।
अङ्गं रङ्गदशामनङ्गनृपतेः कारागृहं श्रीयते
भावैश्चित्रपदार्थभावितरसान् श्लोकान् पठत्याननम् ॥ "

उक्तप्रत्युक्तम्—

पदानि साधिक्षेपाणि चित्रं गीतार्थयोजनम् ।
यत्र कोपप्रसादाभ्यामुक्तप्रत्युक्तकं यथा ॥ ६९ ॥

" अपि च तस्याः पश्चान्निषण्णा काचित् कुपिता,

गायति गेयं साधिक्षेपपदं सहचरीमुखे स्खलिते ।
तस्यामियं प्रसन्ना चित्रं गीतार्थमभिनयत्यङ्गैः[2] ॥ "

प्रहसनम्—

अथ प्रहसनं त्रेधा शुद्धवैकृतसंकरैः ।
पाषण्डविप्रप्रभृतिचेटीचेटविटाकुलम् ॥ ७० ॥
चेष्टितं वेषभाषादिशुद्धं हास्यवचोऽन्वितम् ।
कामुकादिवचोवेषैः षण्डकञ्चुकितापसैः ॥ ७१ ॥
विकृतं संकराद्वीथ्या संकीर्णं धूर्तसंकुलम् ।

[1] पटाक्षेपेण U; G 3; A 2.

[2] नयत्युच्चैः U; G 3.

रौद्रबीभत्सरहिता रसाः स्युर्हास्य एव वा ॥ ७२ ॥
भाणवत्संधिलास्याङ्गान्येकाङ्कं द्व्यङ्कमेव वा ।

डिमः—

डिमे वस्तु प्रसिद्धं स्याद् वृत्तयः कैशिकीं विना ॥ ७३ ॥
नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ॥ ७४ ॥
रसैरहास्यशृङ्गारशान्तैः षड्भिः समन्वितः ।
मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ॥ ७५ ॥
चन्द्रसूर्योपरागैश्च न्याय्ये रौद्ररसेऽङ्गिनि ।
चतुरङ्कश्चतुःसंधिर्निर्विमर्शो डिमः स्मृतः ॥ ७६ ॥
इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम् ।
ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ॥ ७७ ॥

व्यायोगः—

ख्यातेतिवृत्तो व्यायोगः ख्यातोद्धतनराश्रयः ।
हीनो गर्भावमर्शाभ्यां दीप्ताः स्युर्डिमवद्रसाः ॥ ७८ ॥
अस्त्रीनिमित्तसंग्रामो जामदग्न्यजयो यथा ।
एकाहचरितैकाङ्को व्यायोगो बहुभिर्नरैः ॥ ७९ ॥

समवकारः—

कार्यं समवकारेऽपि चामुखं नाटकादिवत् ।
ख्यातं देवासुरं वस्तु निर्विमर्शास्तु संधयः ॥ ८० ॥
वृत्तयो हीनकैशिक्यो नेतारो देवदानवाः ।
द्वादशोद्धतविख्याताः फलं तेषां पृथक्पृथक् ॥ ८१ ॥

अङ्गी वीरोऽङ्गानि चान्ये यद्वदम्भोधिमन्थने ।
अङ्कैस्त्रिभिस्त्रिकपटस्त्रिशृङ्गारस्त्रिविद्रवः ॥ ८२ ॥
द्विसंधिरङ्कः प्रथमः कार्यो द्वादशनाडिकः ।
चतुर्द्विनाडिकावन्त्यौ नाडिका घटिकाद्वयम् ॥ ८३ ॥
वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयः ।
धर्मार्थकामैः शृङ्गारा नात्र बिन्दुप्रवेशकौ ॥ ८४ ॥
व्रताद्युज्ज्वलता शौचं धर्मशृङ्गार उच्यते ।
मुक्तारत्नाद्यलंकारैरर्थशृङ्गार एव हि ॥ ८५ ॥
संभोगविप्रलम्भादिः कामशृङ्गार इत्ययम् ।
पुरावरोधयुद्धेभवाताग्न्यादिषु विद्रवाः ॥ ८६ ॥
वीथ्यङ्गानि[1] यथालाभं कुर्यात्प्रहसनं यथा ।

वीथी—

वीथी तु कैशिकीवृत्तौ संध्यङ्गांशश्च भाणवत् ॥ ८७ ॥
रसः सूच्यस्तु शृङ्गारः स्पृशेदपि रसान्तरम् ।
नायिकानायकौ कार्यौ शृङ्गारद्वयसंश्रयौ ॥ ८८ ॥

वीथ्यङ्गानि—

युक्ता प्रस्तावनाख्यातैरङ्गैरुद्घात्यकादिभिः ।
उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम् ॥ ८९ ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि त्रयोदश ॥ ९० ॥

[1] वीथ्यङ्गादि U ; G. 3.

उद्घात्यकम् —

गूढार्थपदपर्यायमाला प्रश्नोत्तरस्य वा ।
यत्रान्योन्यसमालापो द्वेधोद्घात्यं मतं यथा ॥ ९१ ॥

"मानवती— अय्ये कादंबिणि, आअदो तुह कालो ।
(आर्ये कादम्बिनि, आगतस्तव कालः ।)

कादम्बिनी— वत्से मानवति, अत एव खल्वहं विहरामि । किंतु अकालेऽप्ययं राजहंसः प्रविष्ट इति विचारयामि ।

राजा— (समन्तादवलोक्य अनाकलितविहङ्गविहारः स्वगतम्)
वचनमिदमात्मविषयं वर्णितमनयावधार्यते युक्त्या ।
प्रमदानामनुरागः प्रायः प्राप्तेरपि प्रियं तनुते ॥

मानवती— अय्ये, राअहंसो कहिं दिट्ठो ?
(आर्ये, राजहंसः कुत्र दृष्टः ?)

कादम्बिनी— वत्से, तव मानसे ।

मानवती— अय्ये, मत्तासि ।
(आर्ये, मत्तासि ।)"

"का श्लाघा गुणिनां क्षमा परिभवः को यः स्वकीयैः कृतः
किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते ।
को मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः
कैर्विज्ञातमिदं विराटनगरे छन्नस्थितैः पाण्डवैः ॥ "

अवलगितम्—

यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ।
प्रस्तुतेऽन्यत्र वा तत्स्याद् द्विधावलगितं यथा ॥ ९२ ॥

"रामः—लक्ष्मण, तातवियुक्तामयोध्यां विमानस्थो नाहं प्रवेष्टुं शक्नोमि । तदवतीर्य गच्छामि ।

(इत्यवतीर्य कतिचित्पदानि गत्वा निरूप्य)

[1]कोऽयं सिंहासनस्याधः स्थितः पादुकयोः पुरः ।
जटावानक्षवलयी [2]चामरी च विराजते ॥"

"विदूषकः—(अपवार्य) वअस्स, मह कंठे [3]कासेण कंडूदि होदि । किं कादव्वं ?

(वयस्य, मम कण्ठे काशेन कण्डूतिर्भवति । किं कर्तव्यम् ?)

राजा—(सानुनयम्) वयस्य, सकर्पूरं ताम्बूलं चर । तावता कण्ठ-[4]कण्डूतिर्निवर्तते । ताम्बूलं चेदम् ।"

**प्रपञ्चः**—

**असद्भूतं मिथः स्तोत्रं प्रपञ्चो हास्यकृद्यथा ।**

"राजा—वयस्य, त्वया वयमतिसंहिताः ।

विदूषकः—वअस्स, तुए एव्व सिक्खिदणेवुणो तुह एव्व कहं अदिसंदाणं कप्पेमि । किंदु,

घडेमि अण्णेण परस्स जाअं मुणीण मोएमि वदं मुहुत्ते ।
मणस्सिणीणं विहडेमि माणं तुह प्पहावेण तणोमि सव्वं[5] ॥"

(वयस्य, त्वयैव शिक्षितनैपुणस्तवैव कथमतिसंधानं कल्पयामि । किंतु,

[1] कोऽपि A. [2] चारुरेव U ; G 3. S. [3] कोणेण U ; G 3.
[4] कण्डूः U ; G 3. [5] णूणं S.

घटयाम्यन्येन परस्य जायां मुनीनां मोचयामि व्रतं मुहूर्ते ।
मनस्विनीनां विघटयामि मानं तव प्रभावेण तनोमि सर्वम् ॥) "

त्रिगतम्—

**श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह ॥ ९३ ॥**
**नटादित्रितयालापः पूर्वरङ्गे मतं यथा ।**

" नटी—अय्य, तह होदु ।
(आर्य, तथा भवतु)
सूत्रधारः—(आकाशमवलोक्य)
विलोलविद्युल्लतिकावरत्रा विनिःसरद्वारिमदप्रवाहाः ।
घनद्विपा गर्जितबृंहिताढ्याश्चरन्ति खे चातकचञ्चरीकाः ॥ "

छलनम्—

**प्रियाभैरप्रियैर्वाक्यैर्विलोभश्छलनं यथा ॥ ९४ ॥**

" राजा—(सोत्प्रासम्)
समसुखदुःखः संप्रति सखा ममान्योऽस्ति कस्त्वया सदृशः ।
यदमुष्मिन्नपि यतसे कार्ये साहाय्यमेवमाचरितुम् ॥ "

वाकेली—

**विनिवृत्त्यास्य वाकेली द्विस्त्रिः प्रत्युक्तितो यथा ।**

" मानवती—अय्ये कादंबिणि,
अणिसं पि मअरकेदू अयमणिवारिदवेरहृदुत्साहो ।
तं पि दहेत्किं मं विअ दाहो एक्केण तेण दुव्वज्जो ॥
(आर्ये, कादम्बिनि,
अनिशमपि मकरकेतुरयमनिवारितवैरहृदुत्साहः ।
तमपि दहेत्किं मामिव दाह एकेन तेन दुर्वार्यः ॥)

कादम्बिनी—

मन्मथो ननु मात्सर्यात्तद्रूपविजितस्तव ।

तापं तनोति नामुष्य नान्यथा कथमागतः ॥

मानवती—अय्ये, सो एव्व सव्वत्त दीसइ । कहं णाअदो ?

(आर्ये, स एव सर्वत्र दृश्यते । कथं नागतः ?)"

अधिबलम्—

**अन्योन्यवाक्यैरत्युक्तिः स्पर्धयाधिबलं यथा ॥ ९५ ॥**

"भीमः—

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते

तृणमिव परिभूतो यस्य गर्वेण लोकः ।"

इत्युपक्रमे,

"अरे नाहं भवानिव विकत्थनाप्रगल्भः । किंतु,

द्रक्ष्यन्ति न चिरात्सुप्तं बान्धवास्त्वां रणाङ्गणे ।

मद्गदाभिन्नवक्षोऽस्थिवेणिकाभङ्गभीषणम् ॥"

गण्डम्—

**गण्डं प्रस्तुतधिकारि भिन्नं वेगोदितं यथा ।**

"कादम्बिनी—वत्से, समागतः ।

मानवती—(सानन्दम्) अय्ये, कोऽसौ ?

(आर्ये, कोऽसौ ?)

कादम्बिनी—तवानुजः ।

मानवती—(सविषादम्)"

गण्डभेदाः—

अमुमेवान्यथा गण्डं प्राहुः पञ्चविधं परे ॥ ९६ ॥
आकस्मिकमसंबद्धं संबद्धमिव यत्पदम् ।
वाचामन्ते स गण्डः स्याद्भाव्यनिष्टार्थसूचकम् ॥ ९७ ॥
प्रतिहारो रहो हर्षः प्रतिभा व्याहतोऽपि च ।

प्रतिहारः—

प्रतिक्रियान्वितो यस्तु प्रतिहारो मतो यथा ॥ ९८ ॥

“ को मां हन्तुं समर्थः स्यादित्युक्तो रावणेन तु ।
राक्षसो राम इत्याह किं राम इति चोदितः ॥
पुनराह यदा रामः कदाचिदुपयास्यति ।
दूरीकृत्य परं मोहादशिवां वाचमाहरत् ॥ ”

रहः—

आत्मानं निर्दिशेद्यस्तु स रहोगण्ड उच्यते ।

“ यथा दुर्योधनो भीमं हन्तीत्याशयवान् भ्रमात् ।
प्राह दुर्योधनं भीमो हन्तीति कुरुनायकः ॥ ”

हर्षः—

उत्सवोच्छ्रकरोमाञ्चः प्रविश्यामोदकृद्वचः ॥ ९९ ॥
भाषते भावि यत्रासौ हर्षगण्डः स्मृतो यथा ।

“ केनाप्यर्थेन कंसस्येत्युक्तवत्येव यादवे ।
नृत्यन्नानर्तकोऽप्याह दारको जातवानिति ॥ ”

प्रतिभा—

उक्तमन्यार्थमन्येन वचोऽन्यार्थं प्रकल्पयेत् ॥ १०० ॥
सामान्यपदसामर्थ्यात्स गण्डः प्रतिभा मता ।

“ यो जातोऽन्यत्र योऽन्यत्र वर्धितो मधुसंभवः[1] ।
परपुष्टः स संक्रुद्धो मारयत्यनिवारितः ।
इत्युत्कण्ठितया प्रोक्तं कंसेनाहितमन्यथा ॥ ”

व्याहृतः—

द्व्यर्थो वाक्यस्य विन्यासो शुभाशुभसमन्वितः ॥ १०१ ॥
प्रत्यक्षं प्रोच्यते यत्र गण्डः स व्याहृतो मतः ।

“ यथा देवमुनिस्तत्र दानवं कंसमब्रवीत् ।
सभृत्यबलवीर्यस्य प्राप्तोऽस्मि भवतः क्षयम् ॥ ”

अवस्यन्दितम्—

प्रसक्तस्यान्यथा व्याख्या यत्रावस्यन्दितं यथा ॥ १०२ ॥

“ सीता—जाद, कल्लं खु तुम्हेहिं अजुज्झाए गंतव्वं । तहिं सो राआ विणएण णमिदव्वो ।

(जात, कल्यं खलु युवाभ्यामयोध्यायां गन्तव्यम् । तत्र स राजा विनयेन नन्तव्यः ।)

लवः—किमावाभ्यां राजोपजीविभ्यां भवितव्यम् ?

सीता—जाद, सो खु तुम्हाणं पिदा ।

(जात, स खलु युवयोः पिता ।)

[1] यदुपुत्रस्य मधोर्वंशे जातः

लवः—किमावयो रघुपतिः पिता ?

सीता—(साशङ्कम्) ण हु तुम्हाणं, सअलाए एव्व पुहवीए।
(न खलु युवयोः, सकलाया एव पृथिव्याः ।)"

नालिका—

**बहुप्रपञ्चसंयुक्ता हास्यलेशसमन्विता ।**
**प्रहेलिकेव गूढार्था नालिकेत्युच्यते यथा ॥ १०३ ॥**

"राजा—(पुरतो निर्वर्ण्य)

वल्लरी किमुत वामलोचना दूरतो वसति दृष्टिवर्तिनी ।
वायुना चलति किंनु नर्तिता मन्मुखी मदनवेदनासहा ॥

विदूषकः—वअस्स, मए विणिच्चिदम् ।
(वयस्य, मया विनिश्चितम् ।)"

असत्प्रलापः—

**असंबद्धकथाप्रायोऽसत्प्रलापो यथोत्तरः ।**
**विरहोन्मत्तबालादिभाषणेषु मतो यथा ॥ १०४ ॥**

"हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता ।
विभावितैकदेशेन स्तेयं यदभियुज्यते ॥"

"भुक्ता हि महागिरयः स्नातोऽहं वह्निना पिबामि नभः ।
हरिहरहिरण्यगर्भा मम पुत्रास्तेन नृत्यामि ॥"

"अर्चिष्मन्ति विदार्य वक्त्रकुहराण्या सृक्कणो वासुके-
स्तर्जन्या विषकर्बुरान् गणयतः संस्पृश्य दन्ताङ्कुरान् ।
एकं पञ्च नवाष्ट सप्त षडिति व्यत्यस्तसंख्याक्रमा
वाचः शक्तिधरस्य शैशवकलाः श्रेयांसि पुष्णन्तु वः ॥"

व्याहारः—

**अन्यार्थ एव व्याहारो हास्यलेशकरो यथा ।**

" (लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति)

विदूषकः—मा दाव । उवदेससुद्धा णिग्गमिस्ससि ।

(मा तावत् । उपदेशशुद्धा निर्गमिष्यसि ।) "

इत्युपक्रमेण,

" गणदासः—(विदूषकं प्रति) आर्य, उच्यतां यस्त्वया क्रमभेदो लक्षितः ।

विदूषकः—पढमप्पयोगे बम्हणस्स पूआ होदि । सा ताए ण किदा ।

(प्रथमप्रयोगे ब्राह्मणस्य पूजा भवति । सा तया न कृता ।)

(मालविका स्मयते) "

मृदवम्—

**दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं यथा ॥ १०५ ॥**

" कष्टं खलु विप्रकुले जननं कष्टं च भार्यया विरहः ।

धन्याः शूद्रा एषां दारपरिग्रहणमल्पमूल्येन ॥ "

**एवं दिशि विधातव्या द्वित्रिपात्रप्रयोजिता ।**

**अङ्कः—**

**[1]उत्सृष्टिकाङ्के प्रख्यातं वृत्तं बुद्धया प्रयोजयेत् ॥ १०६ ॥**

**रसस्तु करुणः स्थायी नेतारः प्राकृता नराः ।**

**भाणवत्संधिवृत्त्यङ्गैर्युक्तः स्त्रीपरिदेवितैः ॥ १०७ ॥**

**वाचा युद्धं विधातव्यं तथा जयपराजयौ ।**

[1] अङ्कस्यैवोत्सृष्टिकाङ्क इति नामान्तरम् ।

20

ईहामृगः—

मिश्रमीहामृगे वस्तु चतुरङ्कस्त्रिसंधिमान् ॥ १०८ ॥
नरदिव्यावनियमान्नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्त्यो विपर्यासादयुक्तकृत् ॥ १०९ ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यत्र किंचित्किंचित्प्रदर्शयेत् ॥ ११० ॥
संरम्भं परमानीय युद्धं व्याजान्निवारयेत् ।
वधं प्राप्तस्य कुर्वीत परं नैव महात्मनः ॥ १११ ॥
कैशिकीवृत्तिरहितो हास्यशृङ्गारवर्जितः ।
अत्र षण्नायकानन्ये वदन्तीहामृगे नरान् ॥ ११२ ॥

नाटिका—

लक्ष्यते नाटिकाप्यत्र मिश्रवस्तुसमाश्रया ।
तत्र वस्तु प्रकरणान्नाटकान्नायको नृपः ॥ ११३ ॥
प्रख्यातो धीरललितः शृङ्गारोऽङ्गी सलक्षणः ।
देवी तत्र भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥ ११४ ॥
गम्भीरा मानिनी कृच्छ्रात्तद्वशान्नेतृसंगमः ।
प्राप्या तु तादृशी मुग्धा दिव्या वातिमनोहरा ॥ ११५ ॥
अन्तःपुरातिसंबन्धादासन्ना श्रुतिदर्शनैः ।
अनुरागो नवावस्थो नेतुस्तस्यां यथोत्तरम् ॥ ११६ ॥
नेता तत्र प्रवर्तेत देवीत्रासेन वञ्चितः ।
कैशिक्यङ्गैश्चतुर्भिश्च युक्ताङ्कैरिति नाटिका ॥ ११७ ॥

सट्टकम्—

सट्टकं नाटिकावत्स्यात्किंत्वेतत्प्राकृतैः कृतम् ।

प्रवेशकविहीनं च शृङ्गाराद्भुतभूषितम् ॥ ११८ ॥
चतुर्यत्रनिकं कार्यं वयस्यान्तं प्रकीर्तितम् ।

त्रोटकम्—

दिव्यमानुषसंयोगो यत्राङ्केऽङ्के विदूषकः ॥ ११९ ॥
त्रोटकं नाम तज्ज्ञेयं गूढनाटकलक्षणम् ।
सप्ताष्टनवपञ्चाङ्कमन्यन्नाटकवन्मतम् ॥ १२० ॥
सप्ताङ्कं स्तम्भितारम्भस्त्वष्टाङ्कं मदलेखिका[1] ।
मेनकानहुषाख्यं स्यान्नवाङ्कं परिकीर्तितम् ॥ १२१ ॥
प्रकीर्त्यते परं प्राज्ञैः पञ्चाङ्कं विक्रमोर्वशी ।

प्रेक्षणकम्—

गर्भविमर्शहीनं वा मुखनिर्वहणान्वितम् ॥ १२२ ॥
सूत्रधारविहीनं च सर्ववृत्तिसमाश्रितम् ।
नियुद्धसंफेटयुतं परिवर्तकभूषितम् ॥ १२३ ॥
मागधी शौरसेनी वा हीननायकचेष्टितम् ।
नेपथ्ये गीतनाट्यं च परत्रैव प्रयोजनम् ॥ १२४ ॥
अप्रवेशकविष्कम्भमेकाङ्कं प्रेक्षणं विदुः ।
निदर्शनमिह ज्ञेयं वस्तु वालिवधादिकम् ॥ १२५ ॥

गोष्ठी—

अथ गोष्ठी मतैकाङ्का कैशिकीवृत्तिशालिनी ।
कामशृङ्गारसंयुक्ता पञ्चषड्योषिदन्विता ॥ १२६ ॥
प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलंकृता ।

[1] मदनलेखा, A 2.

गर्भावमर्शसंधिभ्यां शून्या नोदात्तवाक्कृता ॥ १२७ ॥
निदर्शनं रैवतमदनिकाख्यमिहोदितम् ।

भाणिका—

अथ स्याद्भाणिकोदात्तनायिकैकाङ्कभूषिता ॥ १२८ ॥
श्लक्ष्णनेपथ्यभाङ्मध्यपुरुषा च प्रकीर्तिता ।
कैशिकीभारतीप्राया त्वङ्गैः सप्तभिरुज्ज्वला ॥ १२९ ॥

भाणिकाङ्गानि—

उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा ।
समर्पणं चानुवृत्तिः संहारश्चापि सप्तमः ॥ १३० ॥
प्रसङ्गात्कार्यकथनमुपन्यासः प्रकीर्तितः
निर्वेदवाक्यव्युत्पत्तिस्तत्र विन्यास उच्यते ॥ १३१ ॥
विबोधो भ्रान्तिनाशः स्यान्मिथ्याज्ञानं तु साध्वसम् ।
समर्पणमुपालम्भवचः स्यात्कोपविद्धया ॥ १३२ ॥
अनुवृत्तिर्निदर्शनस्योपन्यासः प्रकीर्तितः ।
समापनं तु कार्यस्य संहार इति कीर्तितः ॥ १३३ ॥
मुखनिर्वहणोपेता कामदत्ता निदर्शनम् ।

संलापः—

शृङ्गारहास्यरहितः संलाप इति कीर्तितः ॥ १३४ ॥
पुरोपरोधसंग्रामविद्रवैः कपटैर्युतः ।
कैशिकीभारतीहीनो भवेत्पाषण्डनायकः ॥ १३५ ॥
हीनोपनायकयुतः श्मशानादिसमाकुलः ।

संलापाङ्गानि—

सप्तविंशतिरङ्गानि भवन्त्यस्य यथोच्यते ॥ १३६ ॥

उत्कण्ठा चावहित्था च प्रयत्नो ग्रथनं तथा ।
आशंसा तर्कसंदेहतापोद्वेगाश्च मुग्धता ॥ १३७ ॥
आलस्यं प्रतिपत्तिश्च विलापो वाक्यमेव च ।
साधनानुगमोच्छ्वासविस्मयाश्च चमत्कृतिः ॥ १३८ ॥
विस्मृतिर्लोभसंफेटौ वैशारद्यं प्रबोधनम् ।
आश्वासश्च प्रहर्षश्च प्रसत्तिरिति कीर्तितः ॥ १३९ ॥
सलक्षणोदाहरणं व्यक्तत्वान्नात्र दर्शितम् ।
शेषं नाटकवत्सर्वं संलापः समुदाहृतः ॥ १४० ॥
निदर्शनं कनकवतीमाधवं समवेक्ष्यताम् ।

प्रस्थानम्—

दासादिनायकं दासीनायिकं द्व्यङ्कमीरितम् ॥ १४१ ॥
कैशिकीवृत्तिबहुलं बहुताललयान्वितम् ।
सुरापानसमायुक्तं तथा हीनोपनायकम् ॥ १४२ ॥
विलासोद्दिष्टसंयुक्तं प्रस्थानमिति कीर्तितम् ।
निदर्शनमिह ज्ञेयं शृङ्गारललिताह्वयम् ॥ १४३ ॥

काव्यम्—

काव्यमारभटीहीनमेकाङ्कं हास्यसंकुलम् ।
गर्भावमर्शसंधिभ्यां हीनं शृङ्गारभूषितम् ॥ १४४ ॥
खण्डमात्राद्विपदिकाभग्नतालैरलंकृतम् ।
उदात्तोक्तिसमायुक्तं बहुताललयान्वितम् ॥ १४५ ॥
निदर्शनं तु काव्यस्य विज्ञेयो माधवोदयः ।

हल्लीसकम्—

हल्लीसकं तु सप्ताष्टदशस्त्रीजनसंकुलम् ॥ १४६ ॥

संप्रयोज्यैकपुरुषं कैशिकीवृत्तिभूषितम् ।
एकाङ्कं स्यादुदात्तोक्तिबहुताललयान्वितम् ॥ १४७ ॥
निदर्शनं भवेदस्य केलिरैवतकं मतम् ।

रासकम्—

अथ रासकमेकाङ्कं सूत्रधारेण वर्जितम् ॥ १४८ ॥
सुश्लिष्टनान्दीसहितं पञ्चपात्रं द्विसंधिकम् ।
पूर्णं भाषाविभूषाद्यैर्भारतीकैशिकीयुतम् ॥ १४९ ॥
वीथ्यङ्कमण्डितं मुख्यनायिकं ख्यातनायकम् ।
उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम् ॥ १५० ॥
गर्भावमर्शशून्यं च यथा स्यान्मेनकाद्विजम् ।

श्रीगदितम्—

करुणं स्त्री समासीना गायेद्यत्र पठेदपि ॥ १५१ ॥
एकाङ्कं भारतीप्रायं तच्छ्रीगदितमुच्यते ।
गर्भावमर्शरहितं प्रख्यातोदात्तनायकम् ॥ १५२ ॥
प्रसिद्धनायकं ज्ञेयं यद्वत्क्रीडारसालकम् ।

लासिका—

शृङ्गारबहुलैकाङ्का त्रिसंधिर्न्यूननायिका ॥ १५३ ॥
स्वल्पनृत्ताल्पनेपथ्या पीठमर्देन भूषिता ।
विदूषकविटोपेता दशलास्याङ्गभूषिता ॥ १५४ ॥
लासिका सा समुद्दिष्टा यथा वीणावती मता ।

दुर्मल्लिका—

दुर्मल्ली चतुरङ्गा स्यात्कैशिकीभारतीयुता ॥ १५५ ॥

विगर्भा नागरनरा न्यूननायकभूषिता ।
त्रिनाडिः प्रथमाङ्कः स्याद्विटक्रीडामयो भवेत् ॥ १५६ ॥
द्वितीयः पञ्चनाडिः स्याद्विदूषकविलासवान् ।
षण्नाडिकस्तृतीयस्तु पीठमर्दविलासवान् ॥ १५७ ॥
चतुर्थो दशनाडिः स्यादङ्कः क्रीडितनागरः ।
निदर्शनं भवेदत्र यथा बिन्दुमती मता ॥ १५८ ॥

नाट्यरासकम्—

नाट्यरासकमेकाङ्कं बहुताललयात्मकम् ।
हास्यशृङ्गारसंयुक्तं दशलास्याङ्गभूषितम् ॥ १५९ ॥
उदात्तनायकं चैव पीठमर्दोपनायकम् ।
द्वितीयसंधिशून्यं स्याद्वासकसज्जात्र नायिका ॥ १६० ॥
निदर्शनं दर्शनीयं स्याद्विलासवती यथा ।

उल्लाप्यम्—

उल्लाप्यं दिव्यचरितं मुखनिर्वहणान्वितम् ॥ १६१ ॥
शृङ्गारहास्यकारुण्ययुतमेकाङ्कभूषितम् ।
बहुपुस्तं गीतमयं चतुरोज्ज्वलनायकम् ॥ १६२ ॥
[1]नाट्यप्रबन्धनिकुरुम्बमिदं विभाति
दानं त्वदीयमिव मन्नधरातलेन्द्र ॥ १६३ ॥

इति श्रीमदमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे
रूपकनिरूपणं नाम नवमः परिच्छेदः ।

---

[1] अस्य श्लोकस्यापरमर्धं न दृश्यते ।

## दशमः परिच्छेदः

नाट्यालंकाराः—

सिद्धिः प्राप्तिर्विचारश्चानुनयस्तदनन्तरम् ।
उद्दिष्टमपि दाक्षिण्यं प्रसिद्धिर्गर्हणं तथा ॥ १ ॥
पश्चात्तापः स्पृहा क्षोभ आक्रन्दः परिहारकम् ।
नीतिरुत्तेजनं शोभाभिमानः संशयस्तथा ॥ २ ॥
तुल्यतर्कोऽक्षमा चैव व्यवसायो विमर्शनम् ।
युक्तिः प्रोत्साहनं चैव साहाय्यं च निवेदनम् ॥ ३ ॥
अभिज्ञानं च पृच्छा चातिशयो गुणकीर्तनम् ।
[1]इति त्रिंशदलंकाराः प्रायो नाट्येषु संगताः ॥ ४ ॥

सिद्धिः—

सिद्धिरिष्टार्थसंसिद्धेरनेकेषामुदाहृतम् ।

यथा—

" हे भूतधात्रि यदि तावदहं विशुद्धा
तन्मे वरं त्वमिह देहि वृणे वरं च ।
हे विष्णुवासवमहेश्वरचन्द्रसूर्या
जन्मान्तरेषु भविता प्रभुरेव रामः ॥ "

[1] विषयोऽयं नाट्यशास्त्रे षोडशाध्याये विस्तरेणोपवर्णितः, निर्णयसागरमुद्रितपुस्तके १६९ तमे पृष्ठे द्रष्टव्यः ।

प्राप्तिः—

**प्राप्तिः सा समुदायस्य ज्ञानं यच्चैकदेशतः ॥ ५ ॥**

यथा—

" हंस प्रयच्छ मे कान्तां गतिस्तस्या हृता त्वया ।
संभावितैकदेशेन स्तेयं यदभियुज्यते ॥ "

विचारः—

**विचारः स हि विज्ञेयः संशये निर्णयस्तु यः ।**

यथा—

" असंशयं क्षत्त्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ "

अनुनयः—

**वचसा कर्मणा प्रीतिर्यस्मिन्ननुनयो हि सः ॥ ६ ॥**

यथा—

" परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्ररशना चोर्वी सखी च युवयोरियम् ॥ "

उद्दिष्टम्—

**उद्दिष्टं स्यात्परोक्षे च प्रत्यक्षे चार्थकीर्तनम् ।**

परोक्षे यथा—

" तस्मिन् जीवति दुर्धर्षे हतमप्यहतं बलम् ।
तस्मिंस्तु गमितप्राणे जीवन्तोऽपि मृता वयम् ॥ "

प्रत्यक्षे यथा—

यथा—

" हा धिक् प्रियतमा सेयं दुःसंस्थानमलीमसा ।
सर्वथा प्रत्यभिज्ञेया मूर्तीभवति तद्यथा ॥ "

दाक्षिण्यम्—

**दाक्षिण्यं श्लक्ष्णया वाचा परचित्तानुवर्तनम् ॥ ७ ॥**

" प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषण ।
आर्येणानुगृहीतोऽसि निर्विघ्नः सिद्धिमन्तरा ॥ "

प्रसिद्धिः—

**प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम् ।**

यथा—

" सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥ "

गर्हणम्—

**तद् गर्हणं भवेद्यत्तु दोषोद्भेदेन कुत्सनम् ॥ ८ ॥**

यथा—

" अन्यासक्तमवध्यं च निघ्नन् क्षात्त्रपराङ्मुखः ।
न कथं लक्ष्मणो धन्वी लज्जते हृदयादपि ॥ "

पश्चात्तापः—

**पश्चात्तापोऽनुतापस्तु कृत्वाकार्यं तु यो भवेत् ।**

" ([1]प्लवगप्रवरं) निघ्नन् भ्रातृयुद्धाभियोगिनम् ।
अहं सूर्यकुलस्याद्य कलङ्कः किं कृतं मया ॥ "

स्पृहा—

**स्पृहा यस्त्वभिलाषः स्याद्वस्तुनो रामणीयके ॥ ९ ॥**

यथा—

" जीवत्सु तातपादेषु नवे दारपरिग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ "

क्षोभः—

**अधिक्षेपवचोयुक्तः कोपजः क्षोभ उच्यते ।**

यथा—

" त्वया तपस्विचाण्डाल प्रच्छन्नवधवर्तिना ।
न केवलं हतो वाली स्वात्मा च परलोकतः ॥ "

आक्रन्दः—

**शोकप्रलाप आक्रन्दो नाट्यविद्भिरुदीरितः ॥ १० ॥**

यथा—

" हा विधे नष्टपक्षेण मय्येव परिवर्तसे ।
हतस्तातो हता पत्नी भ्राता च निहतो युधि ॥ "

परिहारः—

**परिहारः स विज्ञेयः कृतानुचितमार्जनम् ।**

[1] मातृकायां पदमिदं विलुप्तम् । तथाप्यौचित्यादुन्नीय संयोजितम् ।

यथा—

“ प्राणप्रयाणदुःखार्त उक्तवानस्म्यनक्षरम् ।
तत्क्षमस्व विभो किंच सुग्रीवस्ते समर्पितः ॥ ”

नीतिः—

**न्यायानुवृत्तिरेवात्र नीतिरित्युच्यते यथा ॥ ११ ॥**

“ स्नेहं प्रति न पुत्रेषु विशेषः कश्चिदस्ति मे ।
किंतु न्यायं पुरस्कृत्य मया ज्येष्ठोऽभिषिच्यते ॥ ”

उत्तेजनम्—

**उत्तेजनं तु कार्यार्थे यत्रानक्षरमुच्यते ।**

यथा—

“ इन्द्रजिच्चण्डवीर्योऽसि नाम्नैव बलवानसि ।
कः प्रच्छन्नस्वरूपेण युध्यतेऽस्मद्भयाकुलः ॥ ”

शोभा—

**सिद्धेः पदं समं श्लिष्टं साध्यं शोभाभिधीयते ॥ १२ ॥**

यथा—

“ सद्वंशसंभवः शुद्धः कोटिदोऽपि गुणान्वितः ।
कामं धनुरिव क्रूरो वर्जनीयः सतां प्रभुः ॥ ”

अभिमानः—

**अभिमानोऽपरित्यागो दर्पदुःखसुखस्य च ।**

यथा—

“ खरेन्द्रजिद्दूषणकुम्भकर्णा गताः किमेतेन गता गतास्ते ।
अहं च गच्छामि यदि प्रणाशं तथापि सीतां न समर्पयामि ॥ ”

संशयः—

**अनिश्चयेन वाक्येन समाप्तिः संशयो यथा ॥ १३ ॥**

" इयं स्वर्गाधिनाथस्य लक्ष्मीः किं यक्षकन्यका ।
अथवा विपिनस्यैव देवता किमु पार्वती ॥ "

तुल्यतर्कः—

**स्यादुत्प्रेक्षादिसंपन्नस्तुल्यतर्कस्तु तद्यथा ।**

" तरङ्गभ्रूलताफेनं दुकूलमिव बिभ्रती ।
मन्ये परिणता सेयं सरिद्भावेन भामिनी ॥ "

अक्षमा—

**अक्षमा त्वहितानां या परिभूतिर्न सह्यते ॥ १४ ॥**

यथा —

" सीताहरणदुर्वृत्तपरिपाकफलोन्मुखः ।
स्वकुलस्यान्तकः स त्वमाशराग्रे भवामि ते ॥ "

व्यवसायः—

**कार्याद्यध्यवसायो यस्तन्निश्चयपरं वचः ।**

यथा—

" कियन्मात्रमकूपारः कियन्मात्रं च सा पुरी ।
कियन्मात्रं दशास्योऽपि क्रुद्धस्य मम धन्विनः ॥ "

विमर्शः—

**विमर्शो दुःखदीनानामनिष्टफलनिश्चयः ॥ १५ ॥**

यथा—

" विद्वान् प्रणाशं समरे स्वयं च न तावदात्मानमहं ब्रवीमि ।
महामुनेर्विश्रवसः कुलेऽस्मिन् निवापबीजं किमपीह न स्यात् ॥ "

युक्तिः—

**अवधारणमर्थस्य केनचिद्युक्तिरिष्यते ।**

यथा—

" यदि समरमपास्य नास्ति मृत्यो-
भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम् ॥ "

प्रोत्साहनम्—

**प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ॥ १६ ॥**

यथा—

" कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि ।
तज्जगत्त्रितयं त्रातुं तात ताडय ताडकाम् ॥ "

साहाय्यम्—

**साहाय्यमानुकूल्येन कार्ये कस्यापि योजनम् ।**

यथा—

" रन्ध्राणि तु सजातीयो दुर्लक्षाण्यपि पश्यति ।
इन्द्रजिन्निधनं नाथ लक्ष्मणानुचरे मयि ॥ "

निवेदनम्—

**भूतस्य कथनं भाविसूचनाय निवेदनम् ॥ १७ ॥**

यथा—

"वानरः क्षत्त्रियः कोऽपि शत्रुः क्षुद्रो न गण्यताम् ।
वालिनं कार्तवीर्यं च स कथं विस्मृतो भवान् ॥"

अभिज्ञानम्—

**अभिज्ञानं यदुद्बोधः पूर्वदृष्टस्य केनचित् ।**

यथा—

"आकृतेः किंचिदुल्लेखो विभावयति लक्षणम् ।
महतोपप्लवेनैव पीडितं चन्द्रमण्डलम् ॥"

पृच्छा—

**पृच्छान्वेषणमर्थस्य स्यादर्थाभ्यर्थनापरम् ॥ १८ ॥**

यथा—

"भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू-
रिहास्ते दृष्टा वा विदितमथवास्याः किमु भवेत् ।
वयोऽवस्थां तस्याः शृणुत सुभगो यत्र मदनः
प्रगल्भव्यापारश्चरति हृदि मूर्खश्च वपुषि ॥"

अतिशयः—

**गुणमेकस्य संकीर्त्य तस्यातिशयवर्णनम् ।**
**क्रियते यत्र वाक्यार्थः स स्यादतिशयो यथा ।**

यथा—

“ विधायापूर्वपूर्णेन्दुमस्या मुखमभूद् ध्रुवम् ।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥ ”

गुणकीर्तनम्—

**इष्टसिद्धौ गुणानां तु कीर्तनं गुणकीर्तनम् ॥ १९ ॥**

यथा—

“ शिरोऽर्चितशिवः शौर्यवशीकृतजगत्त्रयः ।
सुरस्त्रीदुर्लभः सोऽहं मनस्वी च दशाननः ॥ ”

**नानाविधैरलंकारैर्नाट्यविद्या विभूषिता ।
मोदाय भवतो भूयान्मनसो मन्नभूपते[1] ॥ २० ॥**

**इति श्रीमदमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे
नाट्यालंकारनिर्णयो नाम दशमः परिच्छेदः ।**

---

[1] मोदाय कल्पतां नित्यं भवतो मन्मभूपते A 2.

# एकादशः परिच्छेदः

अथ चाटुप्रबन्धानां लक्षणं कथ्यतेऽधुना ।

मुक्तकादिविभागः—

मुक्तकं पद्यमेकं स्याद् द्विकं पद्यद्वयं मतम् ॥ १ ॥
त्रिकं त्रयेण पद्यानां पञ्च रत्नानि पञ्चकम् ।
अष्टकं गजमाला स्यान्नवकं रत्नमालिका ॥ २ ॥
दशभिर्दशकं प्रोक्तं द्वादशेन्दुकला स्मृता ।
सप्तविंशतिपद्यानि नाम्ना तारावली मता ॥ ३ ॥
त्रिंशता त्रिंशिका पञ्चाशता पञ्चाशिकेष्यते ।
शतेन शतकं प्रोक्तमष्टोत्तरशतं परम् ॥ ४ ॥
वृत्तैरभिन्नैर्भिन्नैर्वा कार्यमेकं यथारुचि ।
काव्यमप्येकसर्गादि द्वात्रिंशदवधि स्मृतम् ॥ ५ ॥

उदाहरणम्—

अथोदाहरणादीनां लक्षणं कथ्यतेऽधुना ।
कल्पनीयानि पद्यानि सप्त सप्तविभक्तिभिः ॥ ६ ॥
संबोधनात्मिका चान्ते विभक्तिस्त्वष्टमी भवेत् ।
शक्करीप्रभृतीनि स्युश्छन्दांस्यस्य यथारुचि ॥ ७ ॥
रीतिः प्रधाना गौडीया गतिः स्याद् द्रुतमध्यमा ।
ओजःप्रसाधनाः शब्दाः सानुप्रासाः क्वचित्क्वचित् ॥ ८ ॥
विभक्तिघटना चात्र यथाकामं क्रमेण वा ।

तत्राद्यं मालिनीवृत्तं जयेत्यादिसमन्वितम् ॥ ९ ॥
गद्यात्मकदलान्यष्टौ प्रत्येकं सयतीनि च ।
अन्ते तूत्कलिका कार्या समस्तैकपदात्मिका ॥ १० ॥
अन्ते पद्यसमायुक्ता यत्यनुप्रासशोभिनी ।
चतुरुत्कलिका स्याद्वा विभक्त्याभासलाञ्छिता ॥ ११ ॥
कलिकोत्कलिकामृष्टनव्यताललयक्रमा ।
प्रतिपद्यं भवेन्नेतृनाम तत्तद्विभक्तिमत् ॥ १२ ॥

विभक्तिदेवताः—

विराजन्ती कीर्तिमती सुभागा भोगमालिनी ।
कलावती कान्तिमती कमला जयवत्यपि ॥ १३ ॥
एता विभक्त्यधिष्ठात्र्यो देवताः कथिता बुधैः ।
ददत्येताः स्तुतिप्रीताः स्वस्वनामसमं फलम् ॥ १४ ॥
वाक्यमेकं च कर्तव्यमन्ते सार्वविभक्तिकम् ।
आर्या वान्यतमां कुर्यात्कविश्रुत्याख्यया ततः ॥ १५ ॥
अप्राकृता प्राकृता वा प्राकृतोन्मिश्रितापि वा ।
देशिभिश्च पदैर्युक्ता भाषाणां चैव संचयैः ॥ १६ ॥
वंशवीर्यश्रुताद्यैश्च युक्तोदाहरणं मतम्[1] ।

[1] "येन केनापि तालेन गद्यपद्यसमन्वितम् ।
जयेत्युपक्रमं मालिन्यादि प्रासविचित्रितम् ।
तदुदाहरणं नाम विभक्त्यष्टकसंयुतम् ॥

यत्रादौ जयेत्युपक्रमं मालिनीवृत्तं निगद्यते, अनन्तरम् अपिचेत्युपक्रम्याष्ट वाक्यानि सप्रासानि सतालानि प्रतिविभक्ति कथ्यन्ते, अनन्तरं विभक्त्याभासस्तदुदाहरणं नाम काव्यम् ।"

इति साहित्यकल्पद्रुमे लक्षणमुक्तम् ।

उदाहरणे नायकाः—

अमुष्य नायकाः प्रोक्ता देवा दैत्या महीसुराः ॥ १७ ॥
गुरवः क्षोणिपालाश्च सामन्ताः सचिवादयः ।

अङ्गुली—

विभक्तिसप्तकयुता संध्या चैव विना कृता ॥ १८ ॥
अङ्गुलीति समाख्याता सद्भिश्चाटुविशारदैः ।

कल्याणी—

केवलं कलिकासंगात्कल्याणीति निगद्यते ॥ १९ ॥

उत्फुल्लकवती—

केवलोत्कलिकासंगादुत्फुल्लकवती भवेत् ।

फलोदाहरणम्—

यस्यास्तूत्कलिकास्थाने केवलार्या प्रयुज्यते ॥ २० ॥
सा फलोदाहरणं वा स्यादार्यासङ्गान्न भिद्यते ।

विभक्तिनामानि—

केवला प्रथमा वाणी द्वितीया केवला झरी ॥ २१ ॥
तृतीया केवला वापी चतुर्थी केवला फणी ।
पञ्चमी केवला सारी षष्ठी मोरीति कथ्यते ॥ २२ ॥
सप्तमी खलिका प्रोक्ता संबुद्धिः सरसावती ।
भिन्नैर्वर्णैर्भिन्ननामसंभवे च तथा भवेत् ॥ २३ ॥
सर्ववाक्यं च कर्तव्यं कविनायकलाञ्छितम् ।

नवमाणिक्यमाला—

एषैव गद्यरहिता नवमाणिक्यमालिका ॥ २४ ॥

नक्षत्रमाला—

एषैव च त्रिगुणिता भवेन्नक्षत्रमालिका ।

भोगावली—

रसः शृङ्गार एव स्याद्भोगावल्याः प्रपञ्चने ॥ २५ ॥
अनुषङ्गेण मिलितो वीरोऽपि स्यात्क्वचित्क्वचित् ।
वर्णनीयाः क्रमात्साङ्गवीरभोगादयो गुणाः ॥ २६ ॥
आशीःपद्यसमायुक्ता प्रथमे विरतावपि ।
अष्टभिर्वा षोडशभिर्विंशत्या वा पदैर्युता ॥ २७ ॥
दलानि षड् वा चत्वारि प्रत्येकं सयतीनि च ।
मध्ये भवेयुरथवा यमिताद्यक्षरैः क्वचित् ॥ २८ ॥
गतेरपि प्रयोगः स्याद्यथारीति समृद्धितः ।
तत्तदर्थावसानेऽस्य विरतिः स्यात्पदे पदे ॥ २९ ॥
देव त्वं जय वीर त्वं धीर जीवादिकं पदम् ।
तत्तत्स्थाने प्राकृतादिभाषाभिर्बिरुदाश्रितैः ॥ ३० ॥
भोगोपजृम्भितैर्गद्यपद्यैः सेयं सपल्लवैः ।
[1]भोगावली च देशर्तुभावाङ्कज्ञानचातुरी ॥ ३१ ॥

[1] पद्यं परतो गद्यं तच्च चतुर्भूतखण्डिकारुचिरम् ।
क्वचन शृङ्खलिकाक्रमनियमव्याहारभासुराकारम् ॥
तदनु च मात्रायतिभिः संदब्धा षड्दली भवेत्सरसा ।
तदनु च पूर्ववदेकं पद्यं यत्रैष एककः स्कन्धः ॥
स्कन्धैरष्टभिरेभिर्ग्रथिताप्यथवा चतुर्भिरभ्यस्ता ।
पट्टाभिषिक्तराजप्रवरार्हा किंच देवताभ्युचिता ।
गौडीयरीतिसुभगा संबुद्धयन्तैः पदैः परं प्रचुरा ।
अर्थैर्मङ्गलशंसिभिराकीर्णा भोगवर्णनाभरिता ॥

बिरुदावली—

वर्णयेद्वीरलब्धांश्च तांस्तान् श्लाघ्यादिकान् गुणान् ।
चतुर्भिर्लघुभिः पद्यप्रान्ते संमदकारिणी ॥ ३२ ॥
मङ्गलानि फलानि स्युः प्रथमश्रवणादपि ।
वृत्तेनैकेन नेतारं वर्धयेदाशिषान्तिमे ॥ ३३ ॥
ग्रन्थसंख्या शतं षष्टिरत्र ख्यातोत्तमा बुधैः ।
भोगावलिसमायुक्ता देवानां भूभुजामपि ॥ ३४ ॥
वर्णनेन परं विद्यात् प्रायशो बिरुदावलीम्[1] ।
द्वाभ्यां चतसृभिर्वापि पञ्चभिः षड्भिरेव वा ॥ ३५ ॥
भाषाभिर्विहिताभिः स्याद्यदि वा देशभाषितैः ।
कुलक्रमागतैर्वापि स्वापदाननिदर्शकैः ॥ ३६ ॥
पदैरपि च सा यैः स्यात्तत्तदर्थविनाकृतैः ।

गम्भीरदेवधीरप्रमुखपदोज्ज्वलितगद्यपद्यान्ता ।
भोगोपकरणपूर्णऋतुमासदिनादिपूर्णभोगाढ्या ॥
प्रकटितनायकनामा प्रविमलिताशेषपद्यसंभिन्ना ।
आद्ये चान्त्ये च पद्ये विहिताशीर्वादवाक्यसंघटना ॥
भोगावलीति कथिता कविभिश्चाटुप्रबन्धलक्ष्मज्ञैः ॥"

इति साहित्यकल्पद्रुमे लक्षणमुक्तम् ।

[1] आदौ पद्यं परतो भवेयुरष्टौ च कोरकाः सरसाः ।
तदनु च चत्वारः स्युस्तालाश्चत्वारि पल्लवान्यनु च ॥
एकोऽयं स्कन्धः स्याच्चतुर्भिरथवाष्टभिर्भवति ।
बिरुदावलीति कथिता बिरुदैर्वंशागतैः समायुक्ता ॥
स्वभुजार्जितैश्च बिरुदैस्तत्तद्धरणीशविजयसंपन्नैः ।
अपि सार्वभौमदत्तैर्बिरुदैराटोपजृम्भितैः कथिता ॥
गजतुरगरथारोहणसंकुलशस्त्रास्त्रनैपुणैर्भरिता ।
बिरुदैर्यदि संघटिता बिरुदावलिरित्युदीर्यते कविभिः ॥

नानापुरातनक्ष्माभृद्भिरुदारोहणैरपि ॥ ३७ ॥
वाहनारोहशस्त्रास्त्रप्रयोगैर्भोगवर्णनैः ।
गुणिनां वर्णनैश्चापि विनयक्रमशालिभिः ॥ ३८ ॥
गौडरीत्या विधातव्या सानुप्रासा सपल्लवा ।
आद्यन्तयोः स्यादार्या वा गाथा वा मङ्गलात्मिका ॥ ३९ ॥
इत्येवं लक्षणानि स्युर्लक्षणानीतराणि वा ।

गुणावली—

सद्गुणारोपणं यत्र नेतुः सैव गुणावली ॥ ४० ॥
गुणाः परोपकारार्था वर्ण्याः सर्वे प्रधानतः ।
दलानि चाष्टौ चत्वारि सानुप्रासयतीनि च ॥ ४१ ॥
मात्राभिरथवा वर्णैः समानि स्युः परस्य च ।
तादृग्वर्णानि सर्वाणि संस्कृतेन क्वचित्क्वचित् ॥ ४२ ॥

गुणावल्यां रसः—

अस्याः शृङ्गार एकः स्यात्क्वचित्तत्राद्भुतो रसः ।
दलपङ्क्तिविरामेषु देवेत्यादिपदं न्यसेत् ॥ ४३ ॥
आदौ समासभूयिष्ठमन्ते स्याद् वृत्तगन्धि च ।
गद्याद्यपरमाद्यान्मध्ये हि पद्मेव वा ॥ ४४ ॥
पुरे जनपदे रम्ये देशे या गुणसंपदः ।
नेतारं वर्णयेत्ताभिरेषैव स्याद् गुणावली[1] ॥ ४५ ॥

[1] यद्येवमेव रचिता बिरुदव्यतिरिक्तसकलगुणपूर्णा ॥
आहुर्गुणावलीं तां गुणगणगणनीयसकलमुनिनन्द्या ।

इति साहित्यकल्पद्रुमे लक्षणमुक्तम् ।

रगला—

चतसृभिर्भवेत् षड्भिर्भाषाभिर्विलसत्क्रमम् ।
एकैकभाषयैकैकं पद्यं सर्वविभक्तिभिः ॥ ४६ ॥
रगलापि तथापि स्यात्तत्र तत्र सपल्लवा ।

चक्रवालम्—

श्लोकावाद्यन्तयोर्नेतृमङ्गलार्थौ न्यसेद् बुधः ॥ ४७ ॥
तिसृभिर्वाथ वृत्तं चेद्भाषाभिर्मण्डलक्रमात् ।
उत्तमं चक्रवालं स्यादन्यूनानधिकं मतम् ॥ ४८ ॥

लोकोत्तरम्—

रसादीन् वर्णयेद्भूतिगुणकर्मानुसारतः ।
युक्तमेतद्विशेषेण सिद्धिं च विजिगीषुभिः ॥ ४९ ॥
द्वात्रिंशद्गद्यसंयुक्तं गद्याग्रैः पल्लवैर्युतम् ।
चतुर्धा भिन्नरूपेण व्यस्तं सस्वरबन्धनम् ॥ ५० ॥
तालैर्द्वादशभिर्युक्तं लोकोत्तरमुदाहृतम् ।

त्यागघोषणम्—

[1] . . . . . . परं वेश्यः स . . . . . . . . ॥ ५१ ॥
त्यागादयो गुणा यस्यामूह्यन्ते कविभिः कृतौ ।
पूर्वाद्यास्तासु तत्रत्यानाहूया . . . . . . ॥ ५२ ॥
. . . . . . . . . . . . . . . . . . . . . . . ।
. . . . . . गद्यमेकं चतुर्भिः पल्लवैर्युतम् ॥ ५३ ॥
चतुर्धैव समावृत्तं चतुरक्षरबन्धनम् ।

[1] अत्राक्षराणि मातृकायां भ्रष्टानि ।

आशीराद्यन्तयोः कार्या नेतुः पद्यद्वयेन तु ॥ ५४ ॥
एवं पद्यैश्च गद्यैश्च सा भवेत्त्यागघोषणम्[1] ।

चतुर्भद्रम् —

अथ संख्या भवेत् षष्टिः शतं वा स्याद्विशेषतः ॥ ५५ ॥
अस्यास्तु सर्वे नेतारो भवेयुस्त्यागिनः सदा ।
गद्यं पद्यं च तालं च सानुतालं चतुर्विधम् ॥ ५६ ॥
देववीरजयेत्यादिसंबुद्धिश्चान्त एव च ।
स्याच्चतुर्धा च वृत्तं स्याच्चतुर्भद्रमितीरितम् ॥ ५७ ॥
चाटुप्रबन्धैस्त्वयि चारुकीर्तिरुदारवर्णैरुपलाल्यमाना ।
रक्ता सती राजगुरो विचित्रं मन्नक्षमानाथ मरालशुभ्रा ॥ ५८ ॥

इति श्रीमदमृतानन्दयोगिप्रवरविरचितेऽलंकारसंग्रहे
चाटुप्रबन्धलक्षणं नामैकादशः परिच्छेदः ।

अलंकारसंग्रहः संपूर्णः ।

शुभमस्तु ।

---

1 "पद्यं तदनु च गद्यं तदुपरि च त्रीणि पल्लवानि ततः ।
तत्त्यागघोषणं स्यादन्यत्सर्वं यथाचतुर्भद्रम् ॥"
इति साहित्यकल्पद्रुमे लक्षणमुक्तम् ।

## APPENDIX I

[Please refer to the footnote on page 132 of the text.]

### नाट्यशास्त्रे पञ्चमोऽध्यायः

" यस्माद्रङ्गप्रयोगोऽयं पूर्वमेव प्रयुज्यते ।
तस्मादयं पूर्वरङ्गो विज्ञेयो द्विजसत्तमाः ॥ ७ ॥
अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः ।
तन्त्रीभाण्डसमायोगैः पाठ्ययोगकृतैस्तथा ॥ ८ ॥
प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च ।
आश्रावणा वक्त्रपाणिस्तथा च परिघट्टना ॥ ९ ॥
संघोटना ततः कार्या मार्गासारितमेव च ।
ज्येष्ठमध्यकनिष्ठानि तथैवासारितानि च ॥ १० ॥
एतानि तु बहिर्गीतान्यन्तर्यवनिकागतैः ।
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च ॥ ११ ॥
ततः सर्वैस्तु कुतपैः संयुक्तानीह कारयेत् ।
विघट्य वै यवनिकां नृत्तपाठ्यकृतानि तु ॥ १२ ॥
गीतानां मद्रकादीनां योज्यमेकं तु गीतकम् ।
वर्धमानमथापीह ताण्डवं यत्र युज्यते ॥ १३ ॥
ततश्चोत्थापनं कार्यं परिवर्तनमेव च ।
नान्दी शुष्कावकृष्टा च रङ्गद्वारं तथैव च ॥ १४ ॥

चारी चैव ततः कार्या महाचारी तथैव च ।
त्रिकं प्ररोचना चापि पूर्वरङ्गे भवन्ति हि ॥ १५ ॥
एतान्यङ्गानि कार्याणि पूर्वरङ्गविधौ द्विजाः ।
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ १६ ॥
कुतपस्य तु विन्यासः प्रत्याहार इति स्मृतः ।
तथावतरणं प्रोक्तं गायकानां निवेशनम् ॥ १७ ॥
परिगीतक्रियारम्भ आरम्भ इति कीर्तितः ।
आतोद्यरञ्जनार्थं तु भवेदाश्रावणाविधिः ॥ १८ ॥
वाद्यवृत्तिविभागार्थं वक्त्रपाणिर्विधीयते ।
तन्त्र्योजःकरणार्थं तु भवेच्च परिघट्टना ॥ १९ ॥
तथा पाणिविभागार्थं भवेत्संघोटनाविधिः ।
तन्त्रीभाण्डसामायोगान्मार्गासारितमिष्यते ॥ २० ॥
कालपातविभागार्थं भवेदासारितक्रिया ।
कीर्तनाद्देवतानां च ज्ञेयो गीतविधिस्तथा ॥ २१ ॥
अतः परं प्रवक्ष्यामि चोथापनविधिक्रियाम् ।
यस्मादुत्थापयन्त्यादौ प्रयोगं नान्दिपाठकः ॥ २२ ॥
पूर्वमेव तु रङ्गेऽस्मिंस्तस्मादुत्थापनं स्मृतम् ।
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम् ॥ २३ ॥
वन्दनानि प्रकुर्वन्ति तस्माच्च परिवर्तनम् ।
आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते ॥ २४ ॥
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ।
अत्र शुष्काक्षरैरेव ह्यवकृष्टा ध्रुवा यतः ॥ २५ ॥
तस्माच्छुष्कावकृष्टेयं जर्जरश्लोकदर्शिका ।
यस्मादभिनयस्तत्र प्रथमं ह्यवतार्यते ॥ २६ ॥

रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ।
शृङ्गारस्य प्रचरणाच्चारी संपरिकीर्तिता ॥ २७ ॥
रौद्रप्रचरणाच्चापि महाचारीति कीर्तिता ।
विदूषकः सूत्रधारस्तथा वै पारिपार्श्विकः ॥ २८ ॥
यत्र कुर्वन्ति संलापं तच्चापि त्रिगतं स्मृतम् ।
उपक्षेपेण कार्यस्य हेतुयुक्तिसमाश्रिता ॥ २९ ॥
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ।
अतः परं प्रवक्ष्यामि ह्याश्रावणविधिक्रियाम् ॥ ३० ॥
बहिर्गीतविधौ सम्यगुत्पत्तिं करणं तथा ।
चित्रदक्षिणवृत्ते तु सप्तरूपे प्रवर्तिते ॥ ३१ ॥
सोपोहने सनिर्गीते देवस्तुत्यभिनन्दिते ।
नारदाद्यैश्च गन्धर्वैः सभायां देवदानवाः ॥ ३२ ॥
निर्गीतं श्राविताः सम्यग्लयतालसमन्वितम् ।
तच्छ्रुत्वा तु सुखं गानं देवस्तुत्यभिनन्दितम् ॥ ३३ ॥
अभवन् क्षुभिताः सर्वे मात्सर्याद्दैत्यराक्षसाः ।
संप्रधार्य च तेऽन्योन्यमित्यवोचन्नवस्थिताः ॥ ३४ ॥
निर्गीतं तु सवादित्रमिदं गृह्णीमहे वयम् ।
सप्तरूपेण संतुष्टा देवाः कर्मानुकीर्तनात् ॥ ३५ ॥
वयं गृह्णीम निर्गीतं तुष्यामोऽत्रैव वै वयम् ।
ते तत्र तुष्टा दैत्यास्तु साधयन्ति पुनः पुनः ॥ ३६ ॥
रुष्टाश्चापि ततो देवाः प्रत्यभाषन्त नारदम् ।
एते तुष्यन्ति निर्गीते दानवाः सह राक्षसैः ॥ ३७ ॥
प्रणश्यतु प्रयोगोऽयं कथं वै मन्यते भवान् ।
देवानां वचनं श्रुत्वा नारदो वाक्यमब्रवीत् ॥ ३८ ॥

धातुवाद्याश्रयकृतं निर्गीतं मा प्रणश्यतु ।
किंतूपोहनसंयुक्तं धातुवाक्यविभूषितम् ॥ ३९ ॥
भविष्यतीदं निर्गीतं सप्तरूपविधानतः ।
निर्गीतेनावबद्धास्तु दैत्यदानवराक्षसाः ॥ ४० ॥
न क्षोभं न विघातं च करिष्यन्तीह तोषिताः ।
एतन्निर्गीतमेवं तु दैत्यानां स्पर्धया द्विजाः ॥ ४१ ॥
देवानां बहुमानेन बहिर्गीतमिदं स्मृतम् ।
धातुभिश्चित्रवीणायां गुरुलघ्वक्षरान्वितम् ॥ ४२ ॥
वर्णालंकारसंयुक्तं प्रयोक्तव्यं बुधैरथ ।
निर्गीतं गीयते यस्मादपदं वर्णयोजनात् ॥ ४३ ॥
असूयया च देवानां बहिर्गीतमिदं स्मृतम् ।
निर्गीतं यन्मया प्रोक्तं सप्तरूपसमन्वितम् ॥ ४४ ॥
उत्थापनादिकं यच्च तस्य कारणमुच्यते ।
तुष्यन्त्यप्सरसस्तत्र कृतेऽवतरणे द्विजाः ॥ ४५ ॥
आश्रावणायां युक्तायां दैत्यास्तुष्यन्ति सर्वशः ।
वक्त्रपाणौ कृते चैव नित्यं तुष्यन्ति दानवाः ॥ ४६ ॥
परिघट्टनया तुष्टा युक्तया रक्षसां गणाः ।
संघोटनाक्रियायां च तुष्यन्त्यपि च गुह्यकाः ॥ ४७ ॥
मार्गासारितमासाद्य तुष्टा यक्षा भवन्ति हि ।
गीतकेषु प्रयुक्तेषु देवास्तुष्यन्ति नित्यशः ॥ ४८ ॥
वर्धमाने प्रयुक्ते तु रुद्रस्तुष्यति सानुगः ।
तथा चोत्थापने युक्ते ब्रह्मा तुष्टो भवेदिह ॥ ४९ ॥
तुष्यन्ति लोकपालाश्च प्रयुक्ते परिवर्तने ।
नान्दीप्रयोगेऽथ कृते प्रीतो भवति चन्द्रमाः ॥ ५० ॥

युक्तायामवकृष्टायां प्रीता नागा भवन्ति हि ।
तथा शुष्कावकृष्टायां प्रीतः पितृगणो भवेत् ॥ ५१ ॥
रङ्गद्वारे प्रयुक्ते तु विष्णुः प्रीतो भवेदिह ।
जर्जरस्य प्रयोगे तु तुष्टा विघ्नविनायकाः ॥ ५२ ॥
तथा चार्यां प्रयुक्तायामुमा तुष्टा भवेदिह ।
रङ्गप्रयोगमाचर्यं तुष्टो भूतगणो भवेत ॥ ५३ ॥
आश्रावणादिचार्यन्तमेतद्दैवतपूजनम् ।
पूर्वरङ्गे मया ख्यातं तथा चाङ्गविकल्पनम् ॥ ५४ ॥
देवस्तुष्यति यो येन यस्य यन्मनसः प्रियम् ।
तत्तथा पूर्वरङ्गे तु मया प्रोक्तं द्विजोत्तमाः ॥ ५५ ॥
सर्वदैवतपूजार्हं सर्वदैवतपूजनम् ।
धन्यं यशस्यमायुष्यं पूर्वरङ्गप्रवर्तनम् ॥ ५६ ॥
दैत्यदानवतुष्ट्यर्थं सर्वेषां च दिवौकसाम् ।
निर्गीतानि सगीतानि पूर्वरङ्गकृतानि तु ॥ ५७ ॥
या विद्या यानि शिल्पानि या गतिर्यच्च चेष्टितम् ।
लोकालोकस्य जगतस्तदस्मिन् नाटकाश्रये ॥ ५८ ॥
निर्गीतानां सगीतानां वर्धमानस्य चैव हि ।
ध्रुवाविधाने वक्ष्यामि लक्षणं कर्म चैव हि ॥ ५९ ॥

---

# APPENDIX II

Variations in readings as found in different MSS. procured after printing the text.

| Page | Line | |
|---|---|---|
| 1 | 3 | तदुल्लासरसाकारां M 1. |
| | | समुल्लासरसाकारां M 2. |
| | 6 | फलदां गुर्वीं M 1; M 2. |
| | 12 | अपृच्छत् M 1; M 2. |
| 2 | 4 | प्रकीर्णान् M 1. |
| | | विकीर्णान् M 2. |
| | 10 | हकारान्ता: M 1. |
| | 14 | सरसानि च M 1; M 2. |
| | 15 | मनीषिण: M 1; M 2. |
| | 18 | पद्यगद्यात्मकं M 1; M 2. |
| 3 | 3 | उच्छ्वासलम्बकाध्यायं M 1. |
| | | द्वयो: M 1; M 2. |
| | 4 | मिश्रमङ्कादिकं तत्स्यात् M 1. |
| 4 | 4 | पादादौ M 1; M 2. |
| | 6 | जात् M 1; M 2; U. |
| | 7 | शोभाशोभकरौ M 1. |

*Note* : See the Preface for the abbreviations.

| Page | Line | |
|---|---|---|
| | 9 | भयसुख M 1; M 2. |
| 5 | 4 | सर्वदा M 1. |
| | 4 | इति M 1; M 2. |
| | 7 | चरितै: M 1. |
| | 9 | कौतूहलेन विदुषां कोमरङ्कभीम M 1. |
| 6 | 9 | द्वयचित्रकृत् M 1. |
| | 13 | निष्ठ: M 1. |
| | 15 | कोविदै: M 1. |
| | 16 | वलोकनात् M 1; M 2. |
| 7 | 4 | जातमप्यप M 1; M 2. |
| | 20 | तत्रोदाहरणं M 1; M 2. |
| | 21 | लक्ष्यते M 1; M 2. |
| 8 | 6 | यत्र वाच्यं M 1; M 2. |
| | 15 | दाशरथी M 1. |
| | 20 | शिवे M 1. |
| | 21 | ध्वनत्यत्र M 1; M 2. |
| 9 | 7 | विभाव्यते M 1. |
| 11 | 7 | व्यक्तिस्तु भाव्यते M 1. |
| | 18 | अनेकार्था: M 2. |
| 12 | 5 | स्वस्वभावरस: M 1; M 2. |
| | 6 | स्वाभाविका रसा: M 1; M 2. |
| | 12 | यथायोग्यं M 1. |
| 13 | 3 | वक्ष्यते M 1; M 2. |
| | 16 | चित्तासक्तिर्मन:शङ्का M 1. |
| 15 | 10 | मुहुरिन्द्रिय M 2. |
| 16 | 8 | संचारिण: स्मृता: M 2. |

| Page | Line | |
|---|---|---|
| | 14 | अधमे चापहसितं M 2. |
| | 20 | करमर्पयेत्सुतं M 1. |
| 17 | 22 | सात्त्विका मताः M 2. |
| 18 | 12 | लज्जां विदधति यदमी M 1. |
| 19 | 13 | व्यङ्गक्षोणिपति M 1. |
| | 17 | पूर्वोत्तरार्धे व्यत्यस्ते पठिते M 2. |
| 20 | 2 | आस्यशब्दन M 2. |
| | 19 | शान्तिपदं M 1. |
| 22 | 3 | मान्यैरधिवेत्तुगण्ड M 1. |
| 23 | 9 | धीरशान्तोद्धतावपि M 1. |
| | 12 | अनहंकारः M 1. |
| 24 | 3 | सधीरललितो यथा M 2. |
| | 11 | माधवं तं M 1. |
| | 14 | मात्सर्यवान् धूर्तः M 1. |
| 25 | 8 | कुन्तलाधिपसुता M 1. |
| | 20 | स्तनतटी M 1. |
| 26 | 16 | गुणो यथा M 2. |
| | 20 | नेतुर्हास्यकरः M 2. |
| 27 | 14 | नोपलक्ष्यते M 2. |
| 29 | 15 | प्रणिहितश्च करः M 1. |
| | 21 | काञ्चीप्रदेशाम्बरा M 1. |
| 30 | 4 | मध्या तु M 1. |
| | 17 | किमु तेन M 2. |
| 31 | 6 | व्यापारयन्त्या M 2. |
| 32 | 10 | बन्धच्छलः M 1. |
| 33 | 2 | वपुषि वेपथुः M 1. |

